पश्य निजाऽऽत्मसौन्दर्यं, देवानामपि दुर्लभम् ।
आत्मसौन्दर्यलाभेन, सन्तोषो जायते हृदि ॥ ३८० ॥
नार्यादिदेहरूपादि,-सौन्दर्यं तत्तु कल्पितम् ।
क्षणिकं च हृदि ज्ञात्वा, तत्र ज्ञानी न मुह्यति ॥३८१॥
बाह्यसौन्दर्यमोहस्तु, ब्रह्मसौन्दर्यदर्शनात् ।
नश्यत्येव रवेर्भास,-स्तमोनाशो यथा तथा ॥ ३८२ ॥
आत्मसौन्दर्यलाभेन, रूपादिमोहवृत्तयः ।
नश्यन्ति ब्रह्मसौन्दर्यं, भासते विश्वदेहिनाम् ॥३८३॥
सर्वत्र ब्रह्मसौन्दर्यं, दृश्यते हि यदा तदा ।
जडसौन्दर्यमोहस्य,-नाशो भवति तत्क्षणात् ॥३८४॥
आत्मानमन्तरान्यत्र, सौन्दर्यं नैव विद्यते ।
अतःशुद्धाऽऽत्मसौन्दर्यं, पश्याऽऽत्मना हि चेतन ! ॥३८५॥
यावन्न ब्रह्मसौन्दर्यं, दृश्यते हि निजाऽऽत्मना ।
तावज्जडस्य सौन्दर्यान्, मोहो भवति देहिनाम् ॥३८६॥
आत्मसौन्दर्यरूपेण, दर्शनं सर्वदेहिनाम् ।
जायते हि तदा ब्रह्म,-सुखास्वादः प्रजायते ॥३८७॥
विश्वजीवैः समं सत्या, निष्काममित्रभावना ।
येषां जाता सदा तेषा, माऽऽत्मजीवनता भवेत् ॥३८८॥
आत्मैक्यं जगता सार्धं, कृतं येन निजाऽऽत्मना ।
विश्वतस्तस्य नाशो न, विश्वनाशोऽस्ति नो ततः ॥३८९॥

आत्मनो नवधाभक्तिं, विना किञ्चिन्न रोचते।
यस्य तस्य हि भक्तस्य, हृदि व्यक्तः प्रभुर्भवेत्॥३६०॥
ब्रह्मणो भावनादृष्टिः, सर्वत्र व्यापिका यदा।
तदाऽऽत्मनः समष्टित्वं, जायते ज्ञानशक्तितः॥३६१॥
विराट्प्रभुर्निजाऽऽत्मैव, केवलज्ञानशक्तितः।
व्यष्टिसमष्टिरूपोऽस्ति, शक्तिव्यक्तिस्वरूपतः॥३६२॥
अध्यात्मशान्तिवाञ्छा चे,-त्कुरु ब्रह्मप्रचिन्तनम्।
देहाध्यासविनिर्मुक्त्या-ब्रह्मशान्तिः प्रकाशते॥३६३॥
सर्वजातीयसंकल्प,-विकल्पस्य निरोधतः।
आत्मशान्तिर्भवेत्पूर्णा, नान्यथा कोटियत्नतः॥३६४॥
अहंवृत्त्या मृतोभक्तो, ब्रह्मरूपेण जीवति।
जीवन्सन्नपि स ज्ञेयो, मृतो मोहेन जीवकः॥३६५॥
आत्मानन्दरसी ज्ञानी, मोक्षार्थं देहधारकः।
प्रवृत्तौ वा निवृत्तौ वा, समभावेन वर्तकः॥ ३६६ ॥
जीवे जीवे मतिर्भिन्ना, रुचिर्भिन्ना स्वकर्मतः।
मुहुर्मुहुः प्रजायन्ते, नवीनाः बुद्धिपर्यवाः॥ ३६७॥
विचारा न स्थिराः सन्ति, विश्वस्थसर्वदेहिनाम्।
उत्पादश्च विनाशो हि, विचाराणां भवेत्सदा॥३६८॥
यावन्मनो भवेत्ताव,-द्विचाराचारभेदता।
विश्वस्थसर्वलोकानां,-दर्शनधर्मकर्मसु॥ ३६६ ॥

विश्वस्थसर्वजीवानां,–वैचित्र्यं दृश्यते च यत् ।
तत्तु मनः प्रभेदेन, तथा कर्मप्रभावतः ॥ ४०० ॥
अतो विचारकार्याभ्यां, धर्मैक्यं विश्वदेहिनाम् ।
न भूतमद्यपर्यन्तं, भाविनि न भविष्यति ॥ ४०१ ॥
मनोभेदेषु लोकेषु, ज्ञानी समत्वधारकः ।
आत्मज्ञानोपदेशश्च, ददाति विश्वदेहिनः ॥ ४०२ ॥
मनोविचारभेदैश्च, धर्माचारेषु भेदता ।
राज्यादिकप्रवृत्तीनां, सर्वत्र भेदता भुवि ॥ ४०३ ॥
अनादिकालतो भेदो,–ऽभूच्च भाविनि वर्त्स्यति ।
युद्ध्यन्ति मोहिनस्तेन, शस्त्रास्त्रमंत्रतः सदा ॥४०४॥
मनःकर्मादिभेदस्तु, वर्तते सर्वदेहिनाम् ।
विचाराचारभेदेन, योद्धव्यं न कदाचन ॥ ४०५ ॥
आत्मज्ञानस्य लाभेन, मनोलयो भवेद्यदा ।
तदा निजाऽऽत्मना सार्धं, विश्वैक्यं सर्वथा भवेत् ॥४०६॥
विचाराचारभेदेन, यत्सख्यं तन्मनः कृतम् ।
तत्सख्यं क्षणिकं ज्ञेयं, मनोभेदान्न शाश्वतम् ॥४०७॥
विचाराचारतो भिन्नं, यत्सख्यमाऽऽत्मनः खलु ।
शाश्वतं निर्विकल्पं च, अनन्तसुखदायकम् ॥४०८॥
सर्वथा सर्वदा नृणां, विचाराचारतुल्यता ।
तया मैत्री न भूता हि, भाविनि न भविष्यति ॥४०९॥

आत्मस्वरूपभावेन, सख्यं येषां प्रजायते ।
मनोऽतीतं च तन्नित्यं, पूर्णानन्दप्रकाशकम् ॥४१०॥
सर्वविश्वजनैः सार्धं, मनोमैत्री न शाश्वती ।
शुद्धाऽऽत्मप्रेमतो मैत्री, सर्वैः सार्धं सुखप्रदा ॥४११॥
शुद्धाऽऽत्मप्रेममेलेन, निष्कामा विश्वमित्रता ।
मनोभेदेन भेदो न, तत्राऽऽत्मरसवेदनम् ॥ ४१२ ॥
मनःप्रभिन्नजीवानां,—विचारेषु च कर्मसु ।
रागद्वेषौ न कुर्वन्ति, समत्वेन विचक्षणाः ॥ ४१३ ॥
सापेक्षदृष्टितस्तत्र, सत्यं पश्यन्ति कोविदाः ।
सत्यं गृह्णन्ति मिथ्यात्वं, त्यजन्ति च विवेकतः ॥४१४॥
अतस्ते ब्रह्मसंसक्ता, भवन्ति ब्रह्मरागतः ।
विस्मृत्य सर्वसंसारं, भवोदधिं तरन्ति ते ॥४१५॥
इत्येवं हृदि विज्ञाय, मनोलयं कुरुष्व भोः ।
यावन्मनो भवेत्ताव,—त्संसार एव कथ्यते ॥ ४१६ ॥
वारय ज्ञानशक्त्या भो, यत्र तत्र भ्रमन्मनः ।
अन्तर्मुखं मनःकृत्वा, ब्रह्मरूपं विचिन्तय ॥ ४१७ ॥
आत्मशुद्धोपयोगेन, मनोजयो भवेत्खलु ।
जायते केवलज्ञानं, लोकालोकप्रकाशकम् ॥४१८॥
ध्यानसमाधितः पश्चा,—दाऽऽत्मा भवति केवली ।
अघातिकर्मतः पश्चा,—त्सिद्धाऽऽत्मा जायते विभुः॥४१९॥

परस्परविरुद्धा ये, सर्वे धर्मा जगत्तले ।
वैद्यानामिव लोकानां, भवन्ति चित्तशुद्धये ॥ ४२० ॥
वैद्यौषधिमहारोग,–वैविध्यं च यथातथम् ।
सर्वदर्शनधर्माणां,–वैचित्र्यं चित्तशुद्धये ॥ ४२१ ॥
वैद्या ओषधयो रोगा, विविधाश्च यथा तथा ।
धर्माश्च गुरवः सर्वे, ह्याचारा विविधा मताः ॥४२२॥
तारतम्यं च वैद्येषु, रोगेषु ह्यौषधादिषु ।
तथा वक्तृषु धर्मेषु, धर्मकर्मसु दृश्यते ॥ ४२३ ॥
इत्येवं जैनधर्मस्य,–स्याद्वादज्ञानबोधतः ।
ज्ञाता मया जगद्धर्मा, जैनधर्मस्य चाङ्गकाः ॥ ४२४ ॥
सर्वधर्मा नदीरूपा, जैनधर्ममहोदधिम् ।
यान्ति सापेक्षदृष्ट्या ते, चानादिकालतः खलु ॥४२५॥
जैनधर्मो नयैः सर्वै,–र्युक्तो वैराट्प्रभुः स्वयम् ।
तदङ्गाः सर्वधर्माः स्यु,–र्भाषितं पूर्वसूरिभिः ॥४२६॥
जैनधर्मस्तु विज्ञेयो, विश्वधर्मो ह्यतः खलु ।
साधिते जैनधर्मे तु, सर्वधर्माः प्रसाधिताः ॥४२७॥
सागरस्य तरंगा ये, भिन्ना न सागराद्यथा ।
तथा भिन्ना न धर्माः स्युः, जैनधर्मोदधेः खलु ॥४२८॥
यथोदधिं विना न स्युः, तरङ्गाश्च तथा मतम् ।
जैनधर्मं विना सर्व,–धर्मान्विद्धि ह्यपेक्षया ॥ ४२९ ॥

अन्यदर्शनधर्मेषु, यत्सत्यं च प्रदृश्यते ।
तत्सत्यं जैनधर्मस्य,–ज्ञेयं सापेक्षदृष्टितः ॥ ४३० ॥

सर्वनयादिसापेक्ष,–दृष्ट्या मध्यस्थदेहिनाम् ।
सद्देवगुरुधर्माणां,–श्रद्धा ज्ञानं प्रकाशते ॥ ४३१ ॥

आत्मैव सद्गुरुर्देवो, धर्मश्च निश्चयात्स्वयम् ।
यस्याऽऽत्मा सद्गुरुर्जात, स्तस्याऽऽत्मा जायते प्रभुः॥४३२॥

आत्माधीना भवेद्यस्य, प्रकृतिस्तस्य वेगतः ।
आत्मोन्नतिर्भवेत्स्पष्टा, ज्ञानं सुखं च वर्द्धते ॥४३३॥

प्रकृतियोगमालम्ब्य, ज्ञानानन्दस्य रूपकम् ।
प्रकाशन्ते निजाऽऽत्मानं, जनाआत्मपरायणाः ॥४३४॥

आत्मनो न विकाशोऽस्ति, कदाचित्प्रकृतिं विना ।
प्रकृतिस्थोऽपि निःसङ्गो, ज्ञानी भवति केवली ॥४३५॥

प्रकृतिर्ज्ञेयरूपाऽस्ति, चाऽऽत्मा ज्ञानस्य रूपवान् ।
आत्मा तु प्रकृतिं वेत्ति, प्रकृति र्न च चेतनम् ॥४३६॥

प्रकृतिनायकः स्वाऽऽत्मा, प्रकृति र्हि जडं जगत् ।
आत्मा प्रकृतिकार्याणां,–कर्ताऽपि चाक्रियःस्वयम्॥४३७॥

प्रकृतिसर्वकार्येषु, साक्ष्याऽऽत्मा हि भवेद्यदा ।
तदाऽऽत्मा प्रकृतेर्योगा,–न्निर्बन्धः सक्रियोऽपि वै॥४३८॥

असंख्यातप्रदेशोऽह,–मात्मा विश्वप्रभु र्विभुः ।
अनादिकालतो वन्ध,–स्तस्य प्रकृतियोगतः ॥४३९॥

कर्मप्रकृतिसम्बन्ध,—स्य वियोगो भवेद्यदा ।
तदाऽऽत्मनो हि मोक्षोऽस्ति,कर्ताऽऽत्मा स्यान्निजाऽऽत्मनः
प्रकृतौ रागरोषौ न, यदा मुक्तो भवेत्तदा ।
प्रकृतौ कर्तृबुद्धि र्न, यस्य तस्य न बन्धता ॥४४१॥
प्रकृतिः प्रकृतेः कर्त्री, स्वाऽऽत्मा कर्ता निजाऽऽत्मनः ।
इत्येवं साक्षिबुद्ध्या यो, वेत्ति तस्य न बन्धता ॥४४२॥
विश्वस्थोऽपि न विश्वस्थो, विदेहो देहवानपि ।
न प्राणाः प्राणसंस्थोऽपि, कर्मसङ्गी न कर्मवान् ॥४४३॥
शब्दवाच्यो न शब्दोऽहं, न च ह्रस्वो गुरुस्तथा ।
नाऽहं स्नेहो नवा रुक्षो, नाऽहं स्थूलो न वर्तुलः ॥४४४॥
नाऽहं कृशस्तथा स्थूलो, नाऽहं कृष्णो न पीतकः ।
रक्तो नास्मि तथा श्वेतो, नीलो नास्मीति वेद्म्यहम् ॥४४५॥
न सुगन्धो न दुर्गन्धः, शीत उष्णो न चाऽस्म्यहम् ।
नाऽहं तिक्तो न मिष्टोऽहं, कटुकोऽहं न वस्तुतः ॥४४६॥
नाऽहं पृथ्वी नचाकाश,—मग्निर्वायु न वार्यहम् ।
नाऽहं स्वर्गश्च पाताल,—मेकोऽहं विश्वसङ्ग्यपि ॥४४७॥
नाऽहं नरो न नारी वा, नपुंसको न वेद्म्यहम् ।
अवर्णो न च वर्णोऽह, मुच्चनीचो न वस्तुतः ॥४४८॥
गृहस्थोऽहं न सन्न्यासी, सर्वरूपविवर्जितः ।
नाऽहं रागो न रोषोऽहं, नाऽहं क्रोधो न लोभवान् ॥४४९॥

नाऽहं मानं न दम्भोऽहं, नाऽहं कामो न वैरवान् ।
न शत्रुर्नास्मि वा मित्रं, पिता माता न बालकः ॥४५०॥
नाऽहं वृद्धो युवा रोगी, नारको न च देवता ।
नाऽहं तिर्यग् ननामाऽहं, नाऽहं दृश्यो न तारकम् ॥४५१॥
प्रकाशो न तमो नाऽहं, नाऽहं भानुः शशी ग्रहः ।
नास्मि पापं तथा पुण्यं, पुद्गलो न च पुद्गली ॥४५२॥
नाहं जन्म जरा मृत्यु,-र्नाहंभोगो न भोगवान् ।
नाऽहं दया नहिंसाऽहं, निन्दा कीर्त्तिं र्न वित्तवान् ॥४५३॥
विश्वमस्मिन् नच विश्वस्थो, न प्रेमी प्रेमवानपि ।
नाहं गृहं रणं नास्मि, नाऽहं मस्जिच्च मन्दिरम् ॥४५४॥
स्वकीयः परकीयो न, विश्वरूपो न विश्ववान् ।
निरक्षरोऽक्षरोऽव्यक्तो, भिन्नोऽस्मि सर्वविश्वतः ॥४५५॥
सात्त्विकोऽहं न दुष्टोऽहं, नाहं व्रती व्रतं च न ।
नाहं देवो वचो नाडी, न चाहमिन्द्रियाणि वै ॥४५६॥
नाहमिन्द्रो न रङ्कोऽपि, चार्यम्लेच्छो न वस्तुतः ।
कलङ्कं न प्रतिष्ठाऽऽहं, मनोऽतीतो निरञ्जनः ॥४५७॥
सर्वपुद्गलपर्याय,-भिन्नाऽऽत्मानन्तबोधवान् ।
अहं त्वं तत्प्रभिन्नोऽस्मि, व्यवहारी न निश्चयी ॥४५८॥
दासत्वं जडभीत्याऽस्ति, प्रभुत्वं निर्भयत्वतः ।
उत्साह आत्मविश्वासा,- न्निरुत्साहस्तु मोहतः ॥४५९॥

आत्मानन्दस्य विश्वासा,—दुत्साहोऽनन्तजीवनम् ।
प्रादुर्भवति सज्ज्ञानं, चाञ्चल्यं न प्रवर्तते ॥ ४६० ॥

स्वामित्वं यच्च दासत्वं, जडारोपेण कल्पितम् ।
तत्तु मिथ्याऽस्ति दासत्वं, स्वामित्वं न स्वभावतः ॥४६१॥

स्वमाऽऽत्मा निर्भयो नित्यो, निर्मलानन्दधारकः ।
अक्षयो निश्चलः पूर्ण, आधिव्याधिविवर्जितः ॥४६२॥

अरूपं ते स्वरूपं हि, दर्शनज्ञानवान्प्रभुः ।
अनन्तशक्तिसम्पन्नः, सत्तातस्त्वमजोऽव्ययः ॥४६३॥

अनन्तगुणपर्याया,—धारोऽसि त्वं महामहः ।
अनन्तजीवनाऽऽत्मा त्वं, स्वस्वरूपी भव स्वयम् ॥४६४॥

शुद्धध्येयं हृदि स्मृत्वा, स्वकर्तव्यं कुरुष्व भोः ।
जागृहि ब्रह्मभावेन, शुद्धाऽऽत्मा त्वं भविष्यसि ॥४६५॥

दैन्यं मा कुरु मोहेन, विश्वदेवोऽसि चेतन ! ।
जडभिक्षां च याचन्ते, ते दीनाश्चक्रिणोऽपि हि ॥४६६॥

नाहं दीनो न दाताऽस्मि, नाहं कामो न कामवान् ।
नाहं पुंवेदरूपोऽस्मि, नाहं निद्रा न निद्रकः ॥४६७॥

सच्चिदानन्दरूपोऽस्मि, नाहं कर्म न कर्मवान् ।
नाहं जडो जडाद्भिन्न,—श्चादृश्योऽलक्ष्यरूपवान् ॥४६८॥

शुद्धध्येयस्वरूपोऽस्मि, चैकोऽनेको न नाश्यहम् ।
ज्ञातृज्ञेयस्वरूपोऽहं, स्वपरस्य प्रकाशवान् ॥ ४६९ ॥

मत्तः प्रकाशते विश्वं, विश्वतो न प्रकाश्यहम् ।
जडेषु मत्समः कोऽपि, नास्ति स्वान्यप्रकाशकः ॥४७०॥

जडद्रव्येषु वेत्तृत्वं, नास्ति सत्यं वदाम्यहम् ।
प्रत्यक्षोऽहं जगद्वेत्ता, देहस्थः सत्यनिश्चयः ॥४७१॥

प्रमाणमत्र मज्ज्ञानं, प्रत्यक्षं व्यावहारिकम् ।
अनन्तज्ञानपूर्णोऽहं, सत्तया कथ्यते मया ॥ ४७२ ॥

अनन्तधर्मपूर्णोऽहं, भविष्यामि हि शक्तितः ।
कर्मावरणनाशेन, भाविनि भगवानहम् ॥ ४७३ ॥

सुखं नास्ति बहिष्किञ्चि,–त्सुखं पूर्णं निजाऽऽत्मनि ।
इत्येवं निश्चयं कृत्वा, ज्ञानध्यानं करोम्यहम् ॥४७४॥

बाह्यपदार्थलाभेन, किञ्चिद्वृद्धिर्न मे खलु ।
बाह्यहान्या न हानिर्मे, मयैवं निश्चयः कृतः ॥४७५॥

लोकानां स्तुतिनिन्दातो, लाभो हानिर्न मे खलु ।
लोकैषणादिसंज्ञातो, भिन्नाऽऽत्मा निश्चयः कृतः ॥४७६॥

लोकैषणादिसंज्ञातो, मुह्यामि न स्वबोधतः ।
इत्येवं वर्तनादाऽऽत्मा, पूर्णानन्दोऽनुभूयते ॥४७७॥

लोकसंज्ञा जिता येन, नामरूपादिवासना ।
मुक्तिस्तेन कृता हस्ते, जितं सर्वं च तेन हि ॥४७८॥

लोकैषणादिभिर्मुक्तो, मुक्त एव न संशयः ।
सर्वकर्माणि कर्तुं स, योग्यो भवति मानवः ॥४७९॥

यमादितः प्रभिन्नाऽऽत्मा, यमादिकं हि साधनम् ।
साधनेषु न मुह्यामि, साधयिष्ये स्वसिद्धताम् ॥४८०॥
विश्वं पश्यामि नेत्राभ्यां, तत्र मुह्यामि नैव च ।
देहभोगोपभोगेषु, मुह्यामि नैव मोहतः ॥ ४८१ ॥
करोमि योग्यकर्माणि, स्वाधिकारेण शक्तितः ।
अनन्तशक्तिधामाऽहं, चमत्कारोदधिः स्वयम् ॥ ४८२ ॥
कर्ताकर्म स्वयं स्वाऽऽत्मा, करणं स्वाऽऽत्मशक्तयः ।
सम्प्रदानमपादानं, निजाऽऽत्मैव स्वभावतः ॥ ४८३ ॥
आधारोऽस्ति निजाऽऽत्मैव, पर्यायाणां स्वभावतः ।
षट्कारकस्वरूपोऽस्मि, बाह्येन ह्याऽऽन्तरेण च ॥४८४॥
निजाऽऽत्मैव यथा तद्वत्, सर्वाऽऽत्मानो विजानत ।
बाह्यषट्कारकाद्भिन्नो, विशुद्धाऽऽत्मेति जानत ॥४८५॥
आन्तरं कारकं षट्कं, विशुद्धमाऽऽत्मरूपकम् ।
अस्तिनास्तिमयं सर्वं, जगदाऽऽत्ममयं सदा ॥४८६॥
परद्रव्यस्य पर्याया, नास्तिरूपेण ते निजे ।
आत्मनो निजपर्याया, अस्तिरूपेण चाऽऽत्मनि ॥४८७॥
ज्ञेयपर्यायरूपेण, ह्यस्तिनास्तिमयं जगत् ।
आत्मन एव पर्यायो, भिन्नाभिन्नोह्यपेक्षया ॥ ४८८ ॥
अतो विश्वस्वरूपाऽऽत्मा, स्वपरद्रव्यपर्यवैः ।
अस्मिनाऽस्मि ह्यपेक्षातो, जानामि स्वं गुणालयम् ।४८९।

दुष्टाचारात्प्रभिन्नोऽस्मि, भिन्नोऽस्मि सर्वदोषतः
दुष्टाचारांश्च दोषांश्च, दूरीकरोमि भावतः ॥ ४६० ॥
सर्वव्यसनभिन्नोऽहं, सुखं न व्यसनान्नृणाम् ।
सर्वव्यसनमुक्ताना,—माऽऽत्मशक्तिः प्रकाशते ॥४६१॥
दुःखं व्यसनदोषेण, व्यसनासक्तदेहिनाम् ।
व्यसनत्यागतः शान्तिः, सुखंस्वाधीनतो खलु ॥४६२॥
दुर्गुणेभ्यो विमुक्तानां, व्यसनमुक्तदेहिनाम् ।
दुष्टाचारविमुक्ताना,—माऽऽत्मप्रभुः प्रकाशते ॥ ४६३ ॥
साध्येतु साध्यबोधाऽऽत्मा, हेतुषु हेतुबुद्धिमान् ।
निर्मोही समभावी यो, मुक्तात्मा स क्षणाद्भवेत् ॥४६४॥
अहंवृत्तिर्न यस्यास्ति, स्वसाध्ये साधनेषु च ।
अक्रियो वा क्रियावान्स, निर्बन्धो मुक्तआत्मराट् ॥४६५॥
अहंवृत्तिर्हि यस्यास्ति, स्वसाध्यं साधनेषु च ।
अक्रियो वा क्रियावान्स, बद्धो भवति मानवः ॥४६६॥
नाहं व्रती यमी साधु, र्न तपस्वी न संयमी ।
सर्वेभ्यः शुद्धरूपं मे, भिन्नं जानामि तत्त्वतः ॥४६७॥
आत्मशुद्धोपयोगेन, नाहंभावो जगत्त्रये ।
साक्षिभावेन पश्यामि, सर्वविश्वं चराचरम् ॥ ४६८ ॥
हानिर्लाभो न मे किञ्चिद्, विश्वतः समभाविनः ।
हानिर्लाभः सुखंदुःखं, बाह्येन तत्तु कल्पितम् ॥४६९॥

आत्मज्ञानं प्रकर्तव्यं, जडज्ञानं ततः क्रमात् ।
देहाहारादिकर्माणि, कार्याणि हि विवेकतः ॥ ५०० ॥

देहादेर्हानि लाभादि,—कार्यं ज्ञात्वा विवेकतः ।
शरीरावधि तद् योग्यं, कर्तव्यं स्वोपयोगतः ॥५०१॥

रागो द्वेषस्तथा कामो, लोभः क्रोधश्च वैरिता ।
कीर्त्यादिवासनासंगं, संगमेव विजानत ॥ ५०२ ॥

स ज्ञेयः सत्त्यनिस्संगी, बाह्यविषयसंग्यपि ।
कामसंगं विना बाह्य,—संगेषु नास्ति बद्धता ॥ ५०३ ॥

निर्जिता नामरूपादि,—वासना येन योगिना ।
क्रियते तेन सत्प्रीत्या, साक्षात्कारो निजाऽऽत्मनः ।५०४।

निर्जितकामसंगस्य, हृदि व्यक्तो भवेत्प्रभुः
लोकैषणादिमुक्तेन, मुक्तिरत्रैव वेद्यते ॥ ५०५ ॥

सर्वसंगेषु निस्संगः, कामो येन विनिर्जितः ।
विषयसंगमुक्तोऽपि, कामेन संगवान् खलु ॥ ५०६ ॥

आन्तरसंगनिस्संगो, जनो विश्वस्य संगतः ।
निस्संगस्तस्य बाह्यस्य,—त्यागे नास्ति प्रयोजनम् ।५०७।

देहादीनां च सम्बन्धा,—न्निस्संगो मोहवर्जितः ।
मोहादिसंगतः संगी, बाह्यत्यागी वनस्थितः ॥ ५०८ ॥

अहंत्वंममताग्रन्थि, र्यस्य नष्टो विवेकतः ।
बाह्यलक्ष्म्या च किं तस्य, अन्तराऽऽत्मविदेहिनः ।५०९।

समत्वं यस्य संजातं, तस्य किं त्यागतः खलु ।
समाऽऽत्मनस्तपस्त्याग,–क्रियादे र्न प्रयोजनम् ॥५१०॥

ज्ञानवैराग्यसत्प्रीत्या, निःसंगत्वं प्रजायते ।
समत्वं जायते सत्यं, ततो मोक्षः प्रजायते ॥५११॥

बन्धोमोक्षोऽस्ति चित्तेन,–बाह्ये किञ्चिन्न जानत ।
न च बन्धो न मोक्षोऽस्ति, जाते शुद्धे निजाऽऽत्मनि५१२

विज्ञेयः परमाऽऽत्मा स, बन्धे मोक्षे च यः समी ।
विज्ञेयः स च संसारी, बन्धे मोक्षे न यः समी ॥५१३॥

इत्येवमाऽऽत्मबोधस्य,–बीजं सद्गुरुसेवनम् ।
सर्वोपायेषु मुख्यं त,–त्सद्गुरोः पादसेवनम् ॥५१४॥

परस्परोपकारेषु, विश्वस्थसर्वदेहिनाम् ।
स्वाभाविकप्रवृत्तिर्हि, देहादेर्जीवनाय च ॥ ५१५ ॥

आत्मार्थमन्यलोकानां, हितार्थं मुक्तिकांक्षिणाम् ।
निर्मलाऽध्याऽऽत्मगीतेयं, कृता विश्वोपकारिणी॥ ५१६॥

खसिद्धिनिधिचन्द्राङ्के, वैक्रमाब्दे हि वत्सरे ।
श्रावणशुक्लपञ्चम्यां, प्रहराद्ये कुजे दिने ॥ ५१७ ॥

पेथापुरे स्थितिं कृत्वा, ज्ञानवैराग्यभावतः ।
रचिताऽध्याऽऽत्मगीतेयं, बुद्धिसागरसूरिणा ॥५१८॥

पञ्चशताधिकैः पद्यैः, ग्रन्थोऽयमुपकारकः ।
आचन्द्रार्कमहीं याव,–न्नन्दतु विश्वबोधकः ॥ ५१९ ॥

अध्यात्मयोगशास्त्राणा,-मभ्यासाद्ध्यानतो मयि ।
स्वाभाविकी समुत्पन्ना, स्फुरणा ज्ञानसम्भवा ॥५२०॥
यादृशी तादृशी जाता, लिखिता साऽननुक्रमात् ।
हंसदृष्टितया सन्तः सारं गृह्णन्तु भावतः ॥ ५२१ ॥
नानुक्रमोऽत्र पद्यानां, विषयाणां विजानत ।
अत्राऽध्यात्मिकतत्त्वस्य, विषयो मुख्य एव सः ॥५२२॥
भक्तिक्रियादिपक्कानां, गुरुकुलप्रसेविनाम् ।
गुर्वात्मीभूतशिष्याणा, मध्याऽऽत्मधर्मकांक्षिणाम् ।५२३।
देयमध्याऽऽत्मनो ज्ञानं, गीतार्थैर्नयकोविदैः ।
प्राणान्तेऽपि न दातव्यं, धूर्तनास्तिकदेहिनाम् ॥५२४॥
अध्याऽऽत्मज्ञानगीतायाः, पठनाच्छ्रवणाज्जनाः ।
मननात्स्मरणाज्ज्ञानं, सुखं यान्तु च मङ्गलम् ॥५२५॥
अध्यात्मज्ञानिनःसन्तो, वर्द्धन्तां विश्वशान्तिदाः ।
सात्त्विका योगिनो भव्या, व्यक्तीभवन्तु भूरिशः ॥५२६॥
स्वतन्त्राः सन्तु विश्वस्थ,-लोका आत्मसुखार्थिनः ।
शान्तिं तुष्टिं च पुष्टिं च, मङ्गलं यान्तु सत्पदम् ॥५२७॥
चिदानन्दमयाः सर्वे,-भवन्तु विश्वदेहिनः ।
शुद्धाऽऽत्मराज्यसाम्राज्य,-स्वातन्त्र्यं यान्तु सत्वरम् ५२८
मंगलं जैनधर्मोऽस्ति, जैनसंघोऽस्ति मंगलम् ।
मंगलं सन्तु सिद्धार्ह,-त्सूरिवाचकसाधवः ॥५२९॥

॥ ॐ शान्तिः ३ ॥



## ॥ आत्मसमाधि ग्रन्थः ॥



प्रणम्य श्रीमहावीरं, सर्वज्ञं विश्वशासकम् ।
परब्रह्म जगन्नाथं, विष्णुं रामं महाहरम् ॥ १ ॥

प्रणम्य सद्गुरुं भक्त्या, सम्यग्ज्ञानप्रदायिनम् ।
वक्ष्ये समाधिरूपं स,-च्चिदानन्दप्रकाशकम् ॥ २ ॥

स्वपरशास्त्रगुर्वादे,-रनुभवादनेकधा ।
असंख्याताश्च विज्ञेया, भेदा योगस्य मानवैः ॥ ३ ॥

योग एव समाधिर्हि, समाधिर्योग उच्यते ।
ध्यानभेदः समाधिश्च, ततो भवति केवली ॥ ४ ॥

मंत्रयोगः क्रियायोगो, हठयोगश्च कथ्यते ।
लययोगश्च योगेषु,-राजयोगो महान्स्मृतः ॥ ५ ॥

शुद्धाऽऽत्मनो हि यज्ज्ञानं, वैराग्यसमसंयुतम् ।
राजयोगः समाधिः सः, शुद्धोपयोग इष्यते ॥ ६ ॥

रागद्वेषादिसंकल्प,-विकल्पवर्जितं मनः ।
यदा भवेत्तदा चित्त,-समाधिर्जायते खलु ॥ ७ ॥

कषायोपशमो यस्य, तस्य योगः प्रगीयते ।
आत्मन्येव मनः स्थैर्यं, समाधि र्गीयते बुधैः ॥ ८ ॥

रागद्वेषादियुक्तस्य,-चित्तस्य यन्निरोधनम् ।
वृत्तिसंक्षययोगोऽस्ति, समाधिः स च गीयते ॥ ९ ॥

सम एव समाधिर्हि, राजयोगो महान्स्मृतः ।
जीवाजीवपदार्थेषु, चाशुभं न शुभं मनः ॥ १० ॥
धर्मव्यापारकार्येषु,–धर्मिणां च स्थिरं मनः ।
परीषहोपसर्गौ न, समाधिः स च गीयते ॥ ११ ॥
स्वान्येषां धर्मकार्येषु, योग्येषु यत्स्थिरं मनः ।
मोहवृत्तिनिरोधेन, समाधिर्योग उच्यते ॥ १२ ॥
जन्ममृत्यू च देहस्य, प्राणानां च विसर्जनम् ।
न च शुद्धाऽऽत्मनो जन्म, मृत्युश्च निश्चयेन वै ॥१३॥
दर्शनज्ञानचारित्र,–रूपाऽऽत्मा येन बुध्यते ।
तस्य शुद्धोपयोगोऽस्ति, समाधिः स च गीयते ॥१४॥
शुद्धाऽऽत्मनश्च यज्ज्ञानं, समाधिस्तत्स्मृतिः खलु ।
प्रतिक्षणं परंब्रह्म,–स्वरूपस्य प्रचिन्तनम् ॥ १५ ॥
शुद्धाऽऽत्मनः स्मृति र्या च, चिन्तनं तस्य भावना ।
ध्यानं सा सविकल्पाऽस्ति, समाधिर्मोहवारिका ॥१६॥
यमादिसाधनै र्यस्य, स्याच्च ब्रह्मविचारणा ।
कामादीनां शमस्तस्य, सविकल्पसमाधयः ॥ १७ ॥
रागरोषादिसंकल्पा,–विकल्पाश्च भवन्ति न ।
यस्य तस्य समाधिर्हि, यत्र तत्र यदा तदा ॥ १८ ॥
सद्देवगुरुधर्मादेः, साधनाद्भक्तयोगिनाम् ।
प्रशस्तरागरोषादेः, सविकल्पसमाधिता ॥ १९ ॥

सम्यग्दृष्टिगुणस्थान,—मारभ्य सविकल्पता ।
समाधि र्जायतेर्भक्त,—सम्यग्दृष्टिमनीषिणाम् ॥२०॥
निर्विकल्पसमाधिस्तु, गुणस्थाने च सप्तमे ।
उपशमाद्यपेक्षातो, धर्मध्यानाद्विकल्पकः ॥ २१ ॥
धर्मध्यानसमाधिस्तु, सविकल्पसुखप्रदा ।
शुक्लध्यानसमाधिस्तु, निर्विकल्पास्ति मुक्तिदा ॥२२॥
आलम्बनेन युक्ता या, भक्त्यादिचित्तवृत्तयः ।
प्रशस्यमोहयुक्तास्ताः, सविकल्पसमाधयः ॥ २३ ॥
सम्यग्दृष्टिगुणस्थान,—मारभ्य भव्यदेहिनाम् ।
सद्देवगुरुधर्माणां,—सेवाद्योयोग उच्यते ॥ २४ ॥
सेवाभक्तिः क्रियायोगो, ज्ञानं निजाऽऽत्मसाधनम् ।
हेतुयोगाः प्रविज्ञेयाः, सविकल्पाः शिवप्रदाः ॥२५॥
साधनयोगतो भिन्नः, शुद्धाऽऽत्मा निर्विकल्पकः ।
सर्वसाधनयोगेषु, समाधिः सविकल्पकः ॥ २६ ॥
सर्वसाधनयोगेभ्यो, निर्विकल्पः प्रसाध्यते ।
निर्विकल्पसमाधौ तु, पूर्णानन्दोऽनुभूयते ॥ २७ ॥
रोगादिदेहयुक्तोऽपि, ज्ञानी शुद्धोपयोगवान् ।
मुक्तो भवति निर्लेपो, निर्विकल्पसमाधितः ॥ २८ ॥
परीषहोपसर्गादि,—युक्तो ज्ञानी समाधिमान् ।
भवत्येव स्वभावेन, निर्विकल्पदशास्थितः ॥ २९ ॥

निर्विकल्पसमाधिस्तु, सविकल्पसमाधिभिः ।
साध्यते स्वोपयोगेन, साधुभिर्मोत्तकारकः ॥ ३० ॥
मृत्युश्च मोहदेहादेः, समाधिर्मरणं मतम् ।
मृत्युकाले च निर्मोहः, समाधिमृत्युकारकः ॥३१॥
स्वर्गं च सद्गतिं याति, सविकल्पसमाधिमान् ।
याति मुक्तिं महाध्यानी, निर्विकल्पसमाधितः ॥३२॥
समाधिमृत्युलाभोऽस्ति, भक्तानां ज्ञानिनां ध्रुवम् ।
बिभ्यति मृत्युकाले न, निर्भया ज्ञानयोगिनः ॥३३॥
आत्मनः सत्यबोधेन, मृत्युभीति र्विनश्यति ।
मृत्युर्निजाऽऽत्मनो नास्ति, तनुनाशोऽस्ति वस्त्रवत् ॥३४॥
वस्त्रनाशेन देहस्य, यथा नाशो न जायते ।
तथा देहविनाशेन, नाशो नास्ति निजाऽऽत्मनः ॥३५॥
यस्याऽस्ति जन्म तस्यास्ति, विनाशो नियमः खलु ।
नामरूपविनाशोऽस्ति, न नाशोऽस्ति निजाऽऽत्मनः ।३६
आत्मद्रव्यं सदा नित्य,-मनित्यं ज्ञानपर्ययैः ।
शाश्वतोऽजोह्यखण्डोऽस्ति,चानन्तोऽस्ति सनातनः ॥३७॥
आत्माऽहं सर्वविश्वाऽऽत्मा, स्वपरद्रव्यपर्ययैः ।
अस्तिनास्तिमयैः सर्वै, श्चिदानन्दमयोऽस्म्यहम् ॥३८॥
आरोग्यं प्राणदेहादेः, क्षणिकं विद्यते खलु ।
दर्शनज्ञानचारित्र्य,-मारोग्यमाऽऽत्मनोऽस्ति तत् ।।३९॥

आत्मशुद्धोपयोगेन, दुर्ध्यानं नश्यति क्षणात् ।
आर्त्तरौद्रश्च दुर्ध्यानं, मोहेन जायते खलु ॥ ४० ॥

अशुभकर्मणा दुःखं, सुखं च शुभकर्मणा ।
शुभाशुभोदये ज्ञानी, समत्वेन समाधिमान् ॥ ४१ ॥

पापोदयं च सत्पुण्यं, विना भोगं न नश्यति ।
तत्र त्वं साम्यभावेन, तिष्ठ साक्ष्युपयोगतः ॥ ४२ ॥

सुखे दुःखे समत्वं ते, समाधिर्मोहनाशकः ।
समाधिं धारय त्वं भो, देहकर्मस्थितोऽपि सन् ॥४३॥

परीषहोपसर्गे त्वं, समाधिं हृदि धारय ।
आगते मृत्युकाले त्वं, समाधिं हृदि धारय ॥ ४४ ॥

समतैव समाधिर्हि, केवलज्ञानदायकः ।
समाधिसाधनेनैव, सर्वकर्म विनश्यति ॥ ४५ ॥

द्रव्यभावादिभेदेन, समाधयो ह्यनेकशः ।
समरूपः समाधिर्यः, स्वाऽऽत्मरूपप्रकाशकः ॥ ४६ ॥

आगते मृत्युदुःखे त्वं, मा मुहश्चेतन! प्रभो ! ।
मृत्योः पश्चान्महाशर्म, प्राप्स्यसे स्वोपयोगतः ॥४७॥

मृत्युजन्मादिपर्याया,—अनन्ताः कर्मयोगतः ।
चतुरशीतिं लक्षेषु, योनिषु हि त्वया कृताः ॥ ४८ ॥

अशुद्धाः पर्यवास्ते हि, तत्र स्वत्वं न ते प्रभो ।
जागर्तु ब्रह्मभावेन, शुद्धपर्यायवान्भवान् ॥ ४९ ॥

प्रतिक्षणं स्मराऽऽत्मानं, चिदानन्दमयं प्रभुम् ।
सत्तया परमाऽऽत्मान, मनन्तशक्तिसंयुतम् ॥ ५० ॥

न त्वं प्राणा न देहोऽसि, दुःखराशिं सहस्व भोः ।
दुःखसहनतायोगा,–द्विकाशोऽस्ति निजाऽऽत्मनः ॥५१॥

मृत्युकालस्य दुःखेन, कर्मनाशोऽस्ति ते द्रुतम् ।
अतस्त्वं मृत्युतो मा भी, मृत्योः पश्चात्सुखं महत् ॥५२॥

नाशो न मृत्युतस्तेऽस्ति, मृत्युः क्षणिकपर्ययम् ।
विज्ञायैवं स्मराऽऽत्मानं, ततोमोक्षोऽस्ति ते द्रुतम् ॥५३॥

आत्मानमन्तरा सर्वं, मन्यत्स्वप्नोपमं खलु ।
संसारस्मरणाद्दुःख,–माऽऽत्मनः स्मरणात्सुखम् ॥५४॥

सर्वपुद्गलभावेभ्यो, भिन्नोऽसि त्वं न ते तव ।
जडस्य ममतां त्यक्त्वा, स्मराऽऽत्मानं प्रतिक्षणम् ॥५५॥

मत्तो भिन्नं जगत्सर्वं, तत्र मे नास्ति किञ्चन ।
एकोऽस्मि ब्रह्मरूपोऽहं, नाहं दृश्येषु वस्तुषु ॥ ५६ ॥

मदीयं कल्पितं यद्य,–त्तत्तन्मिथ्या मतं मया ।
मोहेन कल्पितं सर्वं, स्वकीयं तत्त्यजाम्यहम् ॥ ५७ ॥

स्मरामि ब्रह्मरूपं मे, विस्मरामि च पुद्गलम् ।
व्युत्सृजामि जगन्मोहं, स्थिरो जातो निजाऽऽत्मनि ।५८।

भूत्वा स्वाऽऽत्मोपयोगी स्वं, चिदाऽऽत्मानं प्रतिक्षणम् ।
स्मरामि निर्ममो भूत्वा, विस्मरामि जडं जगत् ॥५९॥

देहादिजडभावेषु, रागो रोषश्च नास्ति मे ।
रागो रोषो न जीवेषु, सर्वान् क्षमापयाम्यहम् ॥६०॥

अहं त्वं च ममत्वं हि, नास्ति किञ्चिच्चराचरे ।
अहं त्वं च ममत्वं च, विना जीवामि चिद्घनः ॥ ६१ ॥

चिदानन्दस्वरूपेण, जीवनं मे सनातनम् ।
बाह्याऽऽत्मजीवनं मिथ्या, ज्ञात्वा भूतः समाधिमान् ॥६२॥

बाह्यसमाधितोऽनन्त,–गुणश्रेष्ठाः समाधयः ।
आन्तरो मे स्वरूपोऽस्ति, चिदानन्दमयः खलु ॥६३॥

बाह्यान्तरममत्वस्य, त्यागान्मेऽस्ति सुखं भृशम् ।
मत्तद्भावो न मे चित्ते, स्मरामि चिद्घनं निजम् ॥६४॥

ब्रह्मरूपेण पश्यामि, सर्वजीवान्समाधितः ।
आत्मरूपं प्रति प्रेम्णा, गच्छामि हि प्रतिक्षणम् ॥६५॥

विश्वजीवान्नमस्कृत्य, स्वदेशं यामि निश्चलम् ।
सन्तश्चलन्तु सत्प्रीत्या, स्वदेशं प्रति सत्वरम् ॥६६॥

प्रणामोऽस्तु प्रणामोऽस्तु, सर्वविश्वस्थदेहिनाम् ।
यूयमेवाहमाऽऽत्माऽस्मि, वस्तुतो ब्रह्मसत्तया ॥ ६७ ॥

कषायो जायते शीघ्रं, पुद्गलारोपतो मयि ।
वैभाविकी दशा मिथ्या, तत्र मे नास्ति किञ्चन ॥६८॥

कर्मणामनुसारेण, सर्वजीवप्रवृत्तयः ।
अशुभाश्च शुभाः सन्ति, तत्र साम्यं प्रधारय ॥ ६९ ॥

मित्रशत्रुषु रागं वा, द्वेषं किञ्चिन्न धारय ।
कर्मणामनुसारेण, मित्राणि शत्रवश्च ते ॥ ७० ॥

वैरिणः प्रति मा वैरं, कुरुष्व भव्यचेतन !
वैरस्य प्रतिकर्मत्वं, मा कुरु वैरबुद्धितः ॥ ७१ ॥

वैरिणां नाशतः शिक्षा, वैरिणां न मिलत्यहो ।
वैरेण वर्द्धते वैरं, वैरं ज्ञानेन नश्यति ॥ ७२ ॥

यावत्ते वैरभावोऽस्ति, तावच्छान्ति र्न जायते ।
समाधिर्जायते नैव, वैरेण कर्म वर्धते ॥ ७३ ॥

केऽपि शुभं न कुर्वन्ति, पुण्योदयं विना च ते ।
केऽप्यशुभं न कुर्वन्ति, पापोदयं विना च ते ॥ ७४ ॥

पुण्यं पापं न ते रूपं, त्वत्तो भिन्नं विचारय ।
द्वाभ्यां भिन्नश्चिदानन्द, आत्मासि सन्निरञ्जनः ॥७५॥

मित्रं शत्रुर्न ते कोऽपि, त्वं चिदानन्दरूपवान् ।
नाकाशस्येव संयोगो, वियोगश्च हि निश्चयात् ॥७६॥

एकाऽऽत्मा व्यापको नित्यः, संग्रहनयसत्तया ।
स्मरामि ह्याऽऽत्मनः सत्तां, यथा मुक्तिः क्षणाद्भवेत् ।७७।

यदा तदा शरीरादे, र्मृत्युतो न बिभेम्यहम् ।
भयं द्वैताद्भवत्येव, निर्भयोऽद्वैतभावतः ॥ ७८ ॥

स्तुतिनिन्दासु साद्याऽऽत्मा, जातोऽहमुपयोगतः ।
द्वेषोरागो न मे कश्चित्, स्तुतिनिन्दाप्रकर्तृषु ॥७९॥

श्रेयोऽस्तु स्वीयमित्राणां, वैरिणां च विशेषतः ।
श्रेयोऽस्तु विश्वजीवानां, स्वदेशं यान्तु मानवाः ॥८०॥

सर्वदर्शन धर्मेषु, साम्यभावो धृतो मया ।
रागो रोषो न मे किञ्चित्, सर्वदर्शनधर्मिषु ॥ ८१ ॥

कामादिवासनानाशात्, क्षणान्मुक्तो जनो भवेत् ।
कामादिमुक्तितो मुक्तिः, समाधिश्च स्वभावतः ॥८२॥

आत्मन्येव समाधिस्ते, मान्यत्र त्वं परिभ्रम ।
आत्मानन्दः समाधिर्हि, साम्येन जायते खलु ॥८३॥

अनन्तमृत्युजन्मादि, पर्यवाः कर्मणा कृताः ।
आत्मसमाधियोगेन, क्षणान्नश्यन्ति जागृहि ॥ ८४ ॥

मृत्युजन्मादिपर्यायाः, कर्मणां न चिदाऽऽत्मनः ।
इत्येवं निश्चयं पूर्णं, कृत्वाऽऽत्मानं भृशं स्मर ॥८५॥

क्षुत्समा वेदना नास्ति, नास्ति मृत्युसमं भयम् ।
मृत्युतोऽपि न भीतोऽहं, माऽऽत्मज्ञानप्रतापतः ॥८६॥

अकालोऽस्ति निजाऽऽत्मा वै, शुद्धनिश्चयदृष्टितः ।
शुद्धाऽऽत्मा चित्तदेहादे,–भिन्नोऽस्मि तत्र नास्ति मे ।८७।

सत्वरजस्तमोवृत्ति,–समाधिर्न निजाऽऽत्मनः ।
शुद्धाऽऽत्मनः समाधिस्तु, शुद्धज्ञानादिधर्मवान् ॥८८॥

अतीत स्त्रिगुणेभ्यो यः, स समाधिरपेक्षया ।
समाधिसाधनाद्भिन्नः, शुद्धाऽऽत्मा व्यापकः प्रभुः ॥८९॥

शुद्धपूर्णाऽऽत्मनि ध्यानं, समाधिर्न च विद्यते ।
एतादृशो निजाऽऽत्माऽहं, केवलज्ञानभास्करः ॥६०॥

देहातीतो न देहस्य,—नाशेन शोचयाम्यहम् ।
सहिष्येऽनन्तदुःखं वै, मृत्युकाले निजस्मृतेः ॥ ६१ ॥

स्मरामि शुद्धचैतन्यं, बाढंबाढं पुनः पुनः ।
अन्तर्मुहूर्त्तकालीन,—ब्रह्मस्मृतिर्हि मुक्तिदा ॥ ६२ ॥

देहोऽमरो न कस्यापि, मृत्युं यान्ति सुरेश्वराः ।
देहप्रियादिकं सर्वं, जानामि नश्वरं जडम् ॥ ६३ ॥

सर्वविश्वजडादिभ्यो, भिन्नोऽहं स्वोपयोगतः ।
अप्रतिबद्धभावेन, निःसङ्गोऽहं सनातनः ॥ ६४ ॥

सद्द्रव्यक्षेत्रकालैश्च, स्वभावेन निजाऽऽत्मनि ।
स्वोपयोगी प्रभूतोऽहं, नान्यद्द्रव्यं स्मराम्यहम् ॥६५॥

आसन्ने मरणे प्राप्ते, स्वोपयोगोऽस्ति मुक्तिदः ।
त्यक्त्वा देहादिचिन्तां त्वं, ब्रह्मरूपं विचारय ॥६६॥

एकएव निजाऽऽत्मा त्वं, संस्मर त्वं निजं स्मर ।
कुत्राऽपि प्रतिबद्धत्वं, किञ्चिदपि न धारय ॥ ६७ ॥

सिद्धार्हत्साधुधर्माँश्च, शरणं कुरु मुक्तिदम् ।
पश्चात्तापं कुरु स्मृत्या, पापानां सत्यभावतः ॥ ६८ ॥

शुभाशुभविचाराणां, निरोधेन निजाऽऽत्मनि ।
साम्यत्राटकभावेन, लीनो वेद्मि हृदि प्रभुम् ॥ ६९ ॥

सोऽहं तत्त्वमसि व्यक्तः, सोऽहं सोऽहं स्मराम्यहम् ।
विस्मृतोऽस्मि जगत्सर्वं, रागद्वेषमयं खलु ॥१००॥

गगनस्येव निःसङ्गं, चिदानन्दमयं निजम् ।
अनुभवामि जानामि, साक्षात्कारं निजाऽऽत्मनः ॥१०१॥

विश्वब्रह्मस्वरूपेण, साक्षादनुभवो मया ।
समाधिभावलीनेन, कृतः प्रत्यक्षमाऽऽत्मनः ॥ १०२ ॥

ग्राह्यं त्याज्यं च बाह्येषु, करोमि नैव मोहतः ।
शुभाशुभविचारेषु,—ग्राह्यं त्याज्यं न मे समात् ॥१०३॥

ग्राह्यं त्याज्यं च नो स्वस्मिन्, ब्रह्मोपयोगिनश्च मे ।
ग्राह्यत्याज्याद्गतो दूरं, ब्रह्माऽस्मि सर्वशक्तिमान् ॥१०४॥

अभिप्राया जगल्लोकैः, कल्पिता मित्रशत्रुभिः ।
मयि शुभा अयोग्याश्च, तत्र नाहं न ते मम ॥१०५॥

शुभाभिप्रायतो हर्षं, करोमि न कदाचन ।
अशुभान्नास्ति शोको मे, द्वाभ्यां भिन्नोऽस्मि चेतनः १०६

जगल्लोका न जानन्ति, मत्स्वरूपं विलक्षणम्
ज्ञातारो मत्स्वरूपास्ते, परापरप्रकाशिनः ॥ १०७ ॥

विस्मर !! नैव ते रूपं, स्मराऽऽत्मानं प्रतिक्षणम् ।
स्वादस्व स्वोपयोगेन, ब्रह्मानन्दं क्षणे क्षणे ॥ १०८॥

सुखं पौद्गलिकं यत्त,—त्पुद्गलान्नैव जायते ।
आत्मनश्च सुखं तत्तु, स्वाऽऽत्मतो हि प्रजायते॥१०९॥

पुद्गलजडभोगेषु, सुखं स्वेन प्रकल्प्यते ।
मिथ्यात्वबुद्धियोगेन, सुखं स्वाऽऽत्मनि निश्चयात् ॥११०॥
जडपुद्गलभोगेभ्यो, जायते न सुखं ध्रुवम् ।
आत्मगुणः सुखं चास्ति, जडानां न गुणः सुखम् ॥१११॥
आरोपितं मयि व्यक्त, मन्य न्मिथ्यात्वबुद्धितः
ततो भिन्नं निजाऽऽत्मानं, मन्ये समाधिमानहम् ॥११२॥
सर्वविकल्पसंकल्प,—त्यागेनाऽऽत्मा समाधिमान् ।
स्वेनानुभूयते स्वस्मि, न्नित्येवं निर्विकल्पकः ॥११३॥
ब्रह्मजीवनतोजीव !!, प्राणादेर्जीवनाच्च किम् ।
अनन्तं जीवनं तेऽस्ति, तत्स्वयं न क्षयोऽस्ति ते ॥११४॥
आत्मशुद्धोपयोगेन, समाधिर्वर्तते सदा ।
जीवन्नाऽऽत्मा विदेहोऽपि, समाधिसुखमश्नुते ॥११५॥
सोऽहमाऽऽत्मा मया प्रोक्तः, समाधिः स्वसमाधिना ।
समाधिं यान्तु सल्लोकाः, सत्यं सुखं च मङ्गलम् ॥११६॥
अष्टोत्तरशतैः श्लोकै,—रात्मसमाधिसंज्ञकः ।
कृतो ग्रन्थः समाध्यर्थं, बुद्धिसागरसूरिणा ॥११७॥
भारते गुर्जरे देशे, पेथापुरे च भावतः ।
चातुर्मास्यां कृतोग्रन्थः शान्तिसमाधिशर्मदः ॥ ११८ ॥
खसिद्धिनिधिचन्द्राङ्के वैक्रमाब्दे च वत्सरे ।
श्रावणशुक्लसप्तम्यां, गुरौ ग्रन्थः कृतो मया ॥११९॥

आचन्द्रार्कमहीं याव,-त्सर्वविश्वमनीषिणाम् ।
शान्तितुष्टिमहापुष्टि,-समाधिसुखदोऽस्तु सः ॥१२०॥

ॐ अर्हं महावीर शान्तिः ३



# जीवकप्रबोधः ।



जय लोके महावीरः, सर्वज्ञः परमेश्वरः ॥
वन्देऽहं त्वां गुरो देव, सेवनं तेऽहमर्थये ॥ १ ॥

नाथ !! भारतभूपोऽहं, सनाथं कृपया कुरु ॥
क्लेशो नश्यति मे येन, मद्योग्य मुपदिश्यताम् ॥ २ ॥

प्रससारोपदेशस्ते, देशेषु भारतादिषु ॥
हितः स नरनारीणां, धन्यं धन्यं च जन्म ते ॥ ३ ॥

सारशिक्षां च मे देहि, मदुद्धारो यतो भवेत् ॥
दयां कुरु मयि प्रीत्या, आश्रयोऽसि त्वमेव मे ॥ ४ ॥

वेदो नान्योऽस्ति ते वाक्या–,ज्जीवखेदांश्च भञ्जय ॥
प्रजास्त्वस्तु यतः सौख्यं, भवेच्चाऽऽत्मनि लीनता ॥५॥

शृणु जीवकभूपाल !! सत्यभक्तोऽस्ति मे भवान् ॥
आर्यदेशेषु मद्भक्तः, प्रभुभक्तौ सदामनाः ॥ ६ ॥

शृणु प्रीत्योपदेशं मे, क्लेशो नश्यति तेन ते ॥
आतुरेभ्यः कृता शिक्षा, गुणसारं प्रकाशयेत् ॥ ७ ॥

सम्यग्बोधश्च भक्तानां, दुष्टानां च विपर्ययः ॥
भक्ताधीनोऽस्ति देवेशो, ज्ञानं स्यादुपदेशतः ॥ ८ ॥

प्रभुप्राप्तिकृते राज्यं, कुरु साम्राज्यमाऽऽत्मनः ॥
रक्षायै सर्वजीवानां, वर्तते राज्यपद्धतिः ॥ ९ ॥

दण्ड्यन्ते दुर्जनाश्चौरा, न्यायो यत्र प्रजोपरि ॥
प्रजासु वर्तते शान्ति, र्नश्यन्त्यभीत्यशान्तयः ॥ १० ॥
प्रजासु सदृशं प्रेम, दीनोपरि दयां कुरु ॥
न प्रजाभ्यो मनो भिन्नं, स्वार्थान्धं नैव मानसम् ॥ ११ ॥
प्रजार्थं जीवनं श्रेष्ठं, नीत्या देशं सुधारयेत् ॥
प्रजोपकारिकार्याणि, यश्च कामविवर्जितः ॥ १२ ॥
सात्त्विकाहारतो रक्ष, तनुं क्रोधो न धर्मिषु ॥
कुरु सत्यधिया कर्म, मृषा मा वद भीतितः ॥ १३ ॥
राज्यं साक्षितया कुर्व,-न्नुत्तारय निजं स्वयम् ॥
सर्वेषां सदृशो न्याय, स्ततोदूरमशान्तयः ॥ १४ ॥
दण्ड्यन्तेऽन्यायतो लोका, आकुलास्तदुपद्रवात् ॥
मार्यन्ते धर्मिणो यत्र, न सुखं देशराज्ययोः ॥ १५ ॥
अधर्मिणो नृपा यत्र, लोकानां न सुखं क्वचित् ॥
दुष्टभूपेन शान्ति र्न, वर्द्धते न प्रजोन्नतिः ॥ १६ ॥
राज्यं प्रजानुकूलं हि, स्थापयेत्सैव भूपतिः ॥
यत्स्वभावोऽबलः क्रूरः, संघस्तं परिवर्तयेत् ॥ १७ ॥
सर्वलोकः सुखी यत्र, न्यायो यत्र सुखप्रदः ॥
प्रजासंघाग्रणीरेवं, प्रधानोऽस्तु च सैन्यपः ॥ १८ ॥
राज्यार्हाश्च गुणा यत्र, विधेयः सैव भूपतिः ॥
न विना गुणकर्मभ्यां, प्रजासम्मतितो नृपः ॥ १९ ॥

लोकाः पुत्रसमा यत्र, न मुह्यन्ति कुनीतितः ॥
स्वार्थान्धो न कदाचित्स्यात्,-त्प्रजाप्रेम स्वपुत्रवत् ॥२०॥
सत्यप्रज्ञां वदेत्स्पष्टं, विस्मृतिं स्वां क्षमापयेत् ॥
न मुह्येत्कामभोगेषु, न कुर्यात्सत्तया मदम् ॥ २१ ॥
एवं राजा भवेद्यत्र, तत्र धर्मः प्रवर्धते ॥
पुण्यवृद्धिस्ततो वृष्टी,–रसैः सृष्टिश्च शोभते ॥ २२ ॥
असत्करो न चान्याय, स्तत्र राजाऽपि शोभते ॥
गुणवान्सात्त्विको भूप, स्तत्र शान्तिर्गुणाकरः ॥२३॥
दुर्गुणाद्व्यसनाद्दूरं, येषु सत्त्वदयामहः ॥
स्यात्प्रजापालनं यत्र, तत्र धर्मोऽपि वर्धते ॥ २४ ॥
वर्तन्ते नीतयः सर्वा, न्यायस्तुल्यः प्रजेशयोः ॥
प्रजाभूपेष्वभेदः स्यात्, तत्र खेदो न जायते ॥२५॥
हितमन्योन्यमिच्छन्ति, विद्यालक्ष्म्योर्न वा मदः ॥
अन्योऽन्यं स्वार्पणं यत्र, तत्र वृद्धिश्च भूरिशः ॥ २६ ॥
द्वयोः स्वार्थं यतश्चैकं, परमार्थं हि जीवनम् ॥
मर्यादां न त्यजेत्कोऽपि, वृद्धिस्तत्र प्रजेशयोः ॥ २७ ॥
न सन्ति नीतयो यत्र, तत्र राजापवादितः ॥
स्वीकृत्य गच्छ चाज्ञां मे, प्रीणय मत्समां प्रजाम् ॥२८॥
दूरीकर्तुं च दुःस्वार्थं, राजतेजश्च वर्तते ॥
निष्कासय धियं दुष्टां, दुष्टकामांश्च भञ्जय ॥ २९ ॥

लेशं दुष्टवशो माभूः, क्लेशं नान्यायतः कुरु ॥
श्रद्धेहि जैनधर्मेषु, सत्यां वाचं च भाषय ॥ ३० ॥

स्यात्सुखं कर्मभिःपुण्यैः, दुःखं स्यात्पापकर्मणा ॥
प्रजाः पुण्येन रक्ष त्वं, पापकर्म च वारय ॥ ३१ ॥

देशस्य पापपुण्याभ्यां, देशो दुःखी तथा सुखी ॥
पुण्यं स्थापय वर्णेषु, हिंसां वारय देशतः ॥ ३२ ॥

पशुपक्षितरून्रक्ष, दक्षः स्याजनरक्षणे ॥
न्यायं कुरु स्वयं सर्वं, स्वयमावश्यकं कुरु ॥ ३३ ॥

दुःखिनां कुरु संभारं, साधून् धेनूंश्च पालय ॥
वारय व्यसनं देशा,-न्नरनारीसुखं कुरु ॥ ३४ ॥

दुष्टान्दण्डय नीत्या त्व, मुद्यतस्व प्रजाऽवने ॥
साधूनां सेवनं साध्यं, मां परब्रह्म भावय ॥ ३५ ॥

व्यवस्थां कुरु राज्यस्य, स्वयं प्रामाणिको भव ॥
सम्मानय च लोकानां, निर्विवेकी न वा भव ॥३६॥

गच्छ संगृह्य गाम्भीर्यं, वारय दुष्टवासनाः ॥
जैनधर्मं जगद्व्याप्तं, कुरु जन्म फलं शुभम् ॥ ३७ ॥

त्यज भोगविलासं च, धर वैराग्य मान्तरम् ॥
सर्वजीवे शुभं रागं, कुरु जीवक ! ! धर्मतः ॥ ३८ ॥

पक्षपातं त्यजाशु त्वं, व्यर्थगर्वं नवा कुरु ॥
शत्रुतः सावधानः स्या, यथायोग्यं च शिक्षय ॥ ३९ ॥

प्रजासहायका भूत्वा, लभन्ते मामधीश्वराः ॥
सुलभो नृपभावो न, सर्वस्माद्दुर्लभं पदम् ॥ ४० ॥
प्रजोपयोगिकर्माणि, कर्तुं धर्मोऽस्ति भूपतेः ॥
जैनसंघोन्नतिं कर्तुं, लक्ष्यं स्याज्जैनभूपतेः ॥ ४१ ॥
जैनसंघे नृपो जैनः, शुभं राज्यं प्रवर्तयेत् ॥
एकः संघेषु मुख्यः स्यात्, सिद्धान्तं पातिमामनु ॥४२॥
गृही त्यागी महासंघः, सत्सूरिस्तस्य नायकः ॥
स्थापयेज्जैनधर्मं च, जैनधर्मप्रवर्तकः ॥ ४३ ॥
जैनसाम्राज्यवृद्धिः स्या–,द्यतन्ते सन्त ईदृशम् ॥
रक्षका जैनसंघस्य, ये संघप्रमुखादयः ॥ ४४ ॥
जानात्युत्सर्गमुत्सर्गे, चापवादेऽपवादनम् ॥
कुरु राज्यं स्वभावेन, द्रव्यक्षेत्रस्वकालतः ॥ ४५ ॥
सह्यं हि निखिलं दुःखं, गर्वं नाचर सत्तया ॥
धैर्यं विपत्सु मा मुञ्च ! ! दुःखे वीर्यं प्रकाशय ॥४६॥
स्मर मां च स्वयं भूप, ! ! शृणु सर्वं निवेदनम् ॥
स्तुत्वा मां कुरु कर्माणि, धर्मएकःसह व्रजेत् ॥४७॥
कदापि पक्षपातो न, कार्यो गच्छत्यसावपि ॥
पक्षपातेन धर्मान्तो, राज्यादिरपि नश्यति ॥ ४८ ॥
सर्वप्रजामतिं धृत्वा, कुरु नीतिं सुखप्रदाम् ॥
प्रजासु ज्ञानसंचारः सदा साहाय्यतत्परः ॥ ४९ ॥

उपकुरु प्रजाः सर्वा, नरनारीश्च शिक्षिताः ॥
कार्या रोगादिनाशार्थ–, मुपचारास्त्वया पुनः ॥५०॥
दुष्कालादिप्रसंगेषु, सर्वोपायान् समाचर ॥
वारय व्यभिचारादीन्, धर्मिणश्च नरान्कुरु ॥ ५१ ॥
राज्यकर्मप्रबन्धांश्च, पश्य नान्धो भव स्वयम् ॥
लभस्व सर्वशक्तीश्च, कर्म शक्तिमतां कुरु ॥ ५२ ॥
बलिनां सर्वदा राज्यं, राज्यं कार्यं न दुर्बलैः ॥
विद्या ततोऽस्ति साम्राज्यं, तद्राज्यं यस्य शक्तयः ॥५३॥
सर्वप्रकारतो दक्षो, भव स्वप्रगतिं कुरु ।
धैर्यतः कुरु कर्माणि, साम्राज्यं वृद्धि माप्स्यति ॥५४॥
मिथ्यादुष्टाश्च पाखण्डा, स्तदाटोपं निवारय ॥
रक्ष सर्वप्रजास्तुल्याः, सत्यं ब्रूहि च निर्भयः ॥ ५५ ॥
प्रजोन्नतिकृते यश्च, वर्तते स्वं समर्पयन् ॥
स राजा राजयोग्योऽस्ति, दयादानदमैः कृती ॥५६॥
सर्वजीवेषु मां पश्ये–, दात्मवद्वर्तनं शुभम् ॥
सेवकः सर्वलोकानां, राजा गण्यो हि सेवनात् ॥५७॥
पश्येत्प्रजासमं स्वं च, शं लभेत प्रजोन्नतेः ॥
कुर्वन्साधुसतां मानं, शृण्वन् शिक्षां च धारयन् ॥५८॥
सत्यस्य यश्च संगी स्याद्, नासत्ये यश्च मुह्यति ॥
सर्वं माध्यस्थ्यतः पश्ये–,त्स राजा स्वर्गमश्नुते ॥ ६० ॥

निरीक्षते प्रजाः सर्वा, गृहे स्थित्वाऽतिगोपितः ॥
दीनशापं न गृह्णाति, सराजा सत्य ईरितः ॥ ६० ॥
यत्र दासत्ववृत्तिर्न, प्रजा स्वातन्त्र्य मिच्छति ॥
दासाः सन्ति न यद्देशे, तत्र पापं न वर्तते ॥ ६१ ॥
न यत्र शूद्रधिक्कारो, नोच्चावचभिदा हृदि ॥
मर्यादा यत्र नारीणां, मृषावादो न यत्र च ॥ ६२ ॥
सर्वेऽपि सत्यमिच्छन्ति, कोऽपि मिथ्या न पुत्करः ॥
भाति भूपप्रजास्वैक्यं, राज्ये देशे च शान्तयः ॥६३॥
व्यभिचारो न वाऽस्तेयं, द्रोहिणो यत्र नो जनाः
न ब्रूते कोऽप्यसत्साक्ष्यं, सत्यराज्यं जगत्सु तत् ॥६४॥
यत्र नार्थव्ययो न्याये, मिथ्याटोपो न वर्तते ॥
कार्यं सर्वप्रजार्थं स्याद्, सत्यराज्यनृपस्ततः ॥ ६५ ॥
जैनधर्मस्थिती राज्यं, साम्राज्यमखिलं ततः
सर्वराज्यं भवेद्यस्मा–, ज्जैनधर्मः स विश्वगः ॥६६॥
जैनधर्मेऽखिलं राज्यं, जानतां सफला क्रिया ॥
दयादानं तपःसत्यं,–राज्यं सर्वेऽथ सद्गुणाः ॥६७॥
एकोऽन्यत्रेक्षते ज्योति–,राऽऽत्मराज्यं ततो जने ॥
राज्यं मात्याऽऽत्मविज्ञाने, पूर्णानन्दः प्रकाशते ॥६८॥
प्रामाणिको जनो भूपस्तेन दुःखं विनश्यति ॥
आत्माधीनं मनोराज्यं, गुणिन्!! चित्ते प्रकाशय ॥६९॥

इन्द्रियाणि जयेद्यश्च, वशे कृत्वा मनो व्रजेत् ॥
समो यः सुखदुःखेषु, विश्वस्वामी स वर्तते ॥ ७० ॥
कायेन्द्रियमनोजेता, व्यक्तिराज्यं करोति सः ॥
यद्वशे नेन्द्रियं कायो, राज्यार्हः स कदापि न ॥७१॥
विषयेषु बहूत्कण्ठा, विश्वासो यत्र नाऽऽत्मनः ॥
जडमोही परायत्तः, स राजा न गुणी भवेत् ॥७२ ॥
भयधर्ता वपुर्लक्ष्म्यो,–जडाशावाहकश्च यः ॥
नासौ राजा भवेद्गण्यो, देहदासाश्च दुःखिनः ॥ ७३ ॥
सर्वधर्मस्य सत्यज्ञो, राज्यकृत्यं करोति सः ॥
जैनधर्मक्रियाज्ञान,–व्यापकदृष्टिधारकः ॥ ७४ ॥
महन्मनश्च यः कुर्या, दुःख सोढा स भूपतिः ॥
न मोही धनसत्ताभी, राजा वाच्यः पराक्रमात् ॥७५॥
सर्वा प्रिया च यस्योक्तिः, श्रुत्वा सर्वं विचारयेत्
सत्ताधर्ता च नीत्या यः, प्रजानां हितकारकः ॥७६॥
सुखार्थं दण्डयेद्दुष्टान्, यत्संकेतः शुभोत्तमः ॥
उपकृत्यै त्यजेत्स्वार्थ, मुपकारो यदाशये ॥ ७७ ॥
एवं राजाऽस्ति मे भक्तो, बाह्यासक्तिर्न यद्धृदि ॥
सत्यराज्यं हि मद्भक्तिः, जीवन्ते तेन शक्तयः ॥७८॥
स्वेच्छया नाचरेन्न्यायं, पक्षपाते न मुह्यति ॥
न्यायः प्रजेशयोः स्तुल्य, स्तज्जीवद्राज्य मुच्यते ॥७९॥

शृण्वन्प्रजावचः सर्वं, सदा गर्वं न वा चरेत् ॥
मदाज्ञया चरेत्कार्यं, यस्य नान्यायिचिन्तनम् ॥८०॥
एवं राजाऽस्ति मद्भक्तो, निर्लेपी मयि रागवान् ॥
एवं नृपो भवेन्मुक्तो, भुवि सत्यं प्रचारयेत् ॥ ८१ ॥
सति हेतौ विवेकी, स्यात्सत्तायाश्चैव निश्चयी ॥
शत्रूणां सम्मुखे स्थाता, गन्ता च युक्तिबुद्धिभिः॥८२॥
बोधयेत्स्वप्रजाधर्मं, कर्म राज्यार्हमाचरन् ॥
निःसारयेत्प्रजाभ्रान्तिं, प्रजाभ्यः सुखमर्पयेत् ॥८३॥
एवं राजा भवेदार्यो, नादत्तेऽन्यायहारवम् ॥
स्वाश्रयशक्तिधर्ता च, दक्षः सर्वकलासु च ॥ ८४ ॥
एवं राजाऽस्ति यो जैनो, दैन्यं राजप्रजासु न ॥
कर्मयोगिगुणं कर्म, धर्ताऽऽत्मसुखमश्नुते ॥ ८५ ॥
दयां विना न राजा स्या,-द्दयालुः शोभते नृपः ॥
शोभतेऽतिप्रदो राजा, साधुब्राह्मणरक्षकः ॥ ८६ ॥
विवेकी शोभते राजा, साधून्यो सेवतेऽनिशम् ॥
श्रद्धावान्समयं ज्ञात्वा, मत्सत्याज्ञां प्रपालयेत् ॥८७॥
कालस्याऽपि नृपः कालो, यद्रागातिशयो मयि ॥
ज्ञात्वाऽऽचारेषु तद्धर्ता, सतीनारीप्रपालकः ॥ ८८ ॥
सत्यवादी च निर्लोभी, न क्रूरो यत्र भूपतिः ॥
आत्मशुद्धिं प्रजाभक्तौ, मन्यते स शिवं श्रयेत् ॥८९॥

कन्यकारक्षकोऽतीव, स्वकर्तव्यं सदाऽऽचरेत् ॥
सद्गुरोर्देशनाश्रोता, निष्कामकर्मकारकः ॥ ९० ॥

यः श्रोता धर्मशास्त्राणां, स्वज्ञानानुभवी पुनः ॥
देशकालादिविज्ञाता, स राजा मानमश्नुते ॥ ९१ ॥

पापियुद्धं न वा कुर्यात्, नान्यदेशविनाशकः ॥
धर्त्ता सात्त्विकवृत्तीनां, स्यादधर्मान्निवर्तकः ॥ ९२ ॥

त्यागी मिथ्याप्रशंसानां, सदाचारेऽतिरागवान् ॥
नान्यायेन करग्राही, प्रजां किञ्चिन्न पीडय ॥ ९३ ॥

विद्यापीठाऽदिकर्ता च, कलाविद्याप्रसारकः ॥
यत्र सर्वप्रजाः सैन्यं, स्वतन्त्रं राज्यमस्ति तत् ॥ ९४ ॥

प्रजार्थमर्पयेद्भोगं, योगज्ञानादिकं चरेत् ॥
कालावश्यक्रियाकर्ता, स्वयं क्षान्त्वा क्षमापकः ॥ ९५ ॥

मायां प्रपञ्चितां ज्ञात्वा, प्रतिकारपरायणः
नालापे यापयेत्कालं, प्रजासंभारतत्परः ॥ ९६ ॥

नासत्यकर्मधर्ता स्या,—च्छत्रुमित्रपरीक्षकः ॥
दीर्घदृक् परिणामज्ञं, विज्ञं कुर्यादमात्यकम् ॥ ९७ ॥

भेदभावं त्यजेद्दूरं, यः शूरो धर्मसंगरे ॥
कालानुसारतो नीतिं, वर्तेताऽपि प्रवर्तयेत् ॥ ९८ ॥

बुद्धिबलस्य धर्ता यः प्रसन्नपार्श्वरक्षकः ॥
सर्वयुक्त्या चरन्कर्म, ना दत्तेऽन्यायिकं धनम् ॥ ९९ ॥

एवं राजा भवेद्यश्च, शान्ति तुष्टिं लभेत सः ॥
स गण्योऽस्ति हि मे भक्तो,महाधर्मोऽल्पदोषवान्॥१००॥
अल्पदोषमहाधर्मकृतौ धर्मोऽस्ति भूपतेः ॥
एवं सर्वप्रजाकर्म,—सत्यज्ञानविधौ सुखम् ॥ १०१ ॥

शुद्धबुद्ध्या कृते कार्ये, मद्भक्तिःसर्वदेहिनाम् ॥
शुद्धबुद्ध्या न दोषः स्याद्धर्मः स्यात्सर्वकर्मसु ॥ १०२ ॥
साक्षीभूयाऽऽचरेत्कर्म, मत्प्रेम्णाऽसौ न दोषवान् ॥
मद्भक्तिं लभतेऽसौ यः कर्म कुर्या न्मदाप्तये ॥१०३॥

क्षेमं विन्ते प्रजा यस्याः सत्यं प्रेम नृपोपरि ॥
राज्यार्थं स्वार्पणं यत्र, दुःखिन्यस्ताः प्रजाः कुतः ॥१०४॥

राज्यद्रोहेण नाशः स्या,—द्दुःखं द्रोहेण भूपतेः ॥
राज्यं राजप्रजे ह्यस्ति द्विनाशे राज्यविप्लवः ॥ १०५॥

प्रजामतेन राजा स्याद्, गण्यो भूपः प्रजाप्रियः ॥
वंशपरम्परातो न, नृपः स्याद्गुणकर्मतः ॥ १०६ ॥

नीतिः प्रतियुगं भिन्ना, न स्याद्राज्यक्षयो यतः ॥
कलौ कल्यनुसारेण, प्रजा राजा क्रिया मतिः ॥१०७॥

यद्युगे जीवनं येन, तं न्यायं च प्रवर्तयेत् ॥
भूत्वा राजप्रजे त्वेको, राज्यकर्म समाचरेत् ॥ १०८ ॥

स्वातन्त्र्य मन्तरा राज्य, नाशः स्यात्परतन्त्रता ॥
मच्छिक्षा वर्तते यत्र, धर्मसाम्राज्यकं ततः ॥ १०९ ॥

जैनधर्मादिदं राज्यं, भिन्नं नास्ति कदाचन ॥
तत्र राजा प्रजा कोऽपि, दीनो नैव प्रवर्तते ॥ ११० ॥

देशकालानुसारेण, यत्र प्रीतिः प्रवर्तते ॥
जैनधर्मस्य साम्राज्यरीति श्चाऽपि प्रवर्तते ॥ १११ ॥

सत्तायोग्यविभागानां, दानं त्यागो निजार्पणम् ॥
यस्य योग्यो भवेद्य श्च, तद्योग्यं तत्पदं भवेत् ॥ ११२ ॥

योग्यानां योग्यसम्मानं, राज्यकार्ये न हानयः ॥
प्राबल्यं दुर्जनानां न, स्यु श्च सज्जनशक्तयः ॥ ११३ ॥

लञ्चां दत्ते न चादत्ते, पक्षपातस्य नाग्रहः
राजादौ तारतम्यं स्या, त्सत्यं ज्ञानं प्रजासु च ॥ ११४ ॥

सहायस्वार्पणोऽन्योन्यं, न न्यायं लंघयेत्प्रजाः ॥
एवं राज्यं भवेद्यत्र सुखं तत्राऽस्ति जीवक ! ॥ ११५ ॥

पशुपक्षिदयाकर्ता, रागी च पुण्यकर्मणि ॥
न यत्र कलहो लोके, राज्य मैक्यं प्रवर्धते ॥ ११६ ॥

सर्वप्रजाऽभिलष्यो यः सोऽधिकारी च भूपतिः ॥
स राजा भवितु योग्यो, नान्येषां—राज्य भोगधीः ॥ ११७ ॥

विनाऽधिकारं यदि भूपतिः स्या द्धास्यं तदास्याद्गु-
णकर्मभिस्तु ॥
चित्ते तु राजा भवितुं सुसाध्यो, दुःखेन साध्यो गुण
कर्मभिस्तु ॥ ११८ ॥

दुष्टप्रजानृपो यश्च, सोऽनुशेते तदन्तगः ॥
प्रजा दुष्टा नृपो दुष्टो, द्वय मन्ते विनश्यति ॥ ११६ ॥

यःशक्तः शासने कार्ये, नाऽऽसक्तो राज्यवस्तुनि ॥
राज्यप्रवर्तको भूपः सोऽस्ति जीवक धर्मतः ॥ १२० ॥

सर्वकलाप्रवीणो यो, दीनो यो न विपत्तिषु ॥
पुरुषार्थी गुणी चाऽऽत्मा, समयज्ञः स भूपतिः ॥१२१॥

पालयेत्सर्ववर्णान्यः सत्यस्नेही च साधुभिः ॥
जैनधर्म्यवने प्राणदाने यो वाऽस्ति निर्भयः ॥ १२२ ॥

दुराचारात्यये कालो, दीनोपरि महादयी ॥
धारक श्चार्यनीतीनां, सत्यभूपः स जीवकः ॥ १२३ ॥

नाऽहेतुजनसंहारकरो नाऽन्यायधारकः ।
अन्ते स्वयं प्रजासंघो, दुष्टभूपं विनाशयेत् ॥ १२४ ॥

भूपः प्रजाहितार्थं हिं, योऽनुपो गुणकर्मतः ॥
प्रजासंहारकर्ता योऽन्यायेनाऽसौ न भूपतिः ॥ १२५ ॥

प्रजास्वार्पणसाम्राज्यनृपकार्यं प्रजाहितम् ॥
भूपार्थं स्युः प्रजाप्राणाः सुसंकेतो यतःप्रभोः ॥१२६॥

राज्यादेर्न भवेन्मोहो, निजकर्तव्य माचरेत् ॥
प्रजासंघचयो भूपः स्वान्ते मद्रूपमाप्नुयात् ॥१२७॥

सर्वेषां सदृशी भूमिः सर्वेभ्यः क्षमाऽस्ति वस्तुतः ॥
पृथ्व्यप्तेजोनभोवाताः सर्वेभ्यः सन्ति वस्तुतः ॥१२८॥

चन्द्रसूर्याब्धयः सन्ति, सर्वार्थं नैकहेतवे ॥
सर्वार्थं वृक्षनद्याद्या, नैकस्य ममता नृप ॥ १२६ ॥
सहायं दान मन्योऽन्यं, लात्वाऽऽप्त्वा स्वं प्रपोषय ।
रक्षाऽन्योऽन्यं परंप्रेम, सर्वेषां क्षेममिच्छ च ॥१३०॥
एवं भावेन योजीवेत्स सौख्यं लभते नृप !! ॥
सन्तस्त्यागी प्रजा राजा, योगं क्षेमं लभेत च ॥१३१॥
नान्यधर्मविनाशी स्यान्मद्विश्वासं नहि त्यजेत् ।
उदार एवं भूपश्चे ल्लभन्ते प्रेम तत्प्रजाः ॥ १३२ ॥
नाऽनीत्या धारये द्वैरं, कुर्या द्वैरं न वा कलिम् ।
दुष्टानां दण्डने नीत्या, प्रचण्डं रूप माचरेत् ॥१३३॥
वर्तेत साम्यतो लोके, हृदि मत्प्रीतिमाचरेत् ॥
सर्वजीवसुखं चेच्छे, ज्जीवानां दुःख माहरेत् ॥१३४॥
अल्पपापातिपुण्यानि, कुर्यात्कर्माण्यसौ महान् ॥
सत्त्वकर्मगुणैर्भूपः प्रजा दुःखं निवारयेत् ॥ १३५ ॥
दासोपरि नवा कुप्ये द्बोधये दज्ञमानवान् ॥
मिथ्यादुष्कृतशोकेन, कृतं पापं निवारयेत् ॥१३६॥
निर्ममत्वकृतेः कर्ता, मयि ध्यानस्य धारकः ॥
षडावश्यककर्ता च, द्वादशव्रतधारकः ॥ १३७ ॥
सम्यक्त्वादिगुणाधाता, स राजा मुक्तिधारकः ॥
चित्ते जानीहि हे भूप ! स्वं मन श्चाऽपि पावय ॥ १३८ ॥

आयव्ययविवेकी स्या नीतिसिद्धान्तमाश्रय ॥
दूरं कृत्वा प्रमादाँश्च, कर्म स्वाऽऽत्मगुणं कुरु ॥१३९॥

कुरु कर्म स्थिरो भूत्वा, अन्तर्गर्वं न धारय ॥
उत्तिष्ठाऽऽत्मस्वभावे त्वं, नान्यवित्तानि लुण्टय ॥१४०॥

विष्ठासमं परस्वं स्यान्मा,-तृतुल्याः परस्त्रियः ॥
स्वीकुरु नान्यधर्मं त्वं, स्वं धर्मं चोररीकुरु ॥ १४१ ॥

पदं लभ्येत शक्रस्य, प्राप्ती राज्यादिकस्य चेत् ॥
तत्र सारं न विज्ञाय, जैनधर्मं प्रपालय ॥ १४२ ॥

जैनधर्मात्परो नान्यः सर्वधर्मेण लभ्यते ॥
सर्वसत्याम्बुधिं धर्मं, प्राप्य राज्यक्रियां कुरु ॥ १४३ ॥

अखिले चात्र संसारे, जैनधर्मं प्रवर्तय ॥
मैत्र्यादिभावनां सुष्ठु, भावयान्त र्दिवानिशम् ॥१४४॥

सहायं कुरु जैनानां, स्वार्पणेन यथातथम् ॥
एवं विधानतो भूप, मत्पदं लप्स्यसे स्वयम् ॥ १४५ ॥

जीव ! त्वं जैनधर्मार्थं, धर्मं मा त्यज जीवक ! ! ॥
स्वाधिकारेण धर्मं त्वं, धर दोषो न ते मतः ॥१४६॥

धर्मं धर्म्येण युद्धेन, रक्ष कृत्वा बलादिकम् ॥
धर्मरक्षणातो देशे शान्तिः सर्वप्रजोन्नतिः ॥१४७॥

जैनरक्षा सुधर्मोऽस्ति, तेनाधर्मं च नाशयेत् ॥
अल्पदोषो महालाभो, ज्ञायतां जैनसेवने ॥१४८॥

मदुक्तान्मत्समान् ज्ञात्वा, तत्रासक्तो भव स्वयम् ॥
देहि तेभ्यः स्वकं सर्वं, तेषु त्वं ममतां कुरु ॥ १४९॥

जीवत्सु तेषु जीव! त्वं, सत्यं मन्यस्व मद्वचः ॥
ज्ञानाग्रेऽस्ति श्रियोभ्रान्ति–, र्मत्वा शान्तिं शुभां भज ॥ १५० ॥

मद्भक्तः सर्वतः श्रेष्ठः, प्रीत्या तत्सेवनं कुरु ॥
अन्यां माया मुपेक्षस्व, मद्भक्तेषु च पश्य माम् ॥१५१॥

आत्मज्ञाने कुरु प्रीतिं, क्षणिकेषु रतिं त्यज ॥
जडवस्तुषु मा मुह्य!!, पीवाऽऽत्मानुभवामृतम् ॥१५२॥

आत्मा हि सद्यः परमाऽऽत्मदेवः, कश्चिन्नदेवोऽस्ति निजाऽऽत्मतुल्यः ॥
आत्मस्वरूपः खलु जैनधर्मः, शुद्धस्वरूपो जिनधर्मएव ॥ १५३ ॥

सत्त्वासत्त्वात्मधर्मेति, ज्ञाते कर्म न बध्यते ॥
आत्मोपयोगतो धर्मः, शाश्वतं शर्म जायते ॥१५४॥

सद्धर्म आत्मभावेन, सत्यं मात्यत्र निश्चयः ॥
आत्मराज्यं महच्चास्ति, यदाज्ञा विश्वमण्डले ॥१५५॥

आत्मपुरस्सरो नान्यो, राजन्नेवं विचारय ॥
आत्मप्रेम्णाऽऽत्मलाभोऽस्ति, पूर्णानन्दः शिवं व्रजेत् ॥ १५६ ॥

जीवानाऽऽत्मसमान्पश्य, दुष्टवृत्तीश्च संत्यज ॥
सर्वसंगेषु निःसंग, आत्मरक्तो भव स्वयम् ॥१५७॥
धामाऽसि सर्वशक्तीनां, सर्वदेवाभिधास्तव ॥
देवरूपं भवद्रूपं, त्वदन्या दुःखयंत्रणा ॥१५८॥
लीयस्व स्वात्मरूपे त्वं, भिन्नोऽसि नामरूपतः ॥
जैनधर्मः स्वधर्मोऽस्ति, सात्त्विकप्रकृतिं कुरु ॥१५९॥
पोषय स्वाश्रिताँल्लोका,-न्नासत्प्रीतिरुषौ कुरु, ।
वेदानामपि वेदोऽसौ, धर्माऽभेदं विलोकय ॥१६०॥
पृथक् पृथक् चये धर्माः, सत्याः सापेक्षिकाश्च ते ॥
आत्मधर्मेऽखिला धर्मा, मान्ति गुह्यमिदंमहत् ॥१६१॥
आत्मज्ञानेऽखिलं ज्ञान, मात्मदानेऽतिसर्जनम् ॥
आत्मरूपाः सुराः सर्वे, ज्ञात्वाऽत्मानं हृदा भज ॥१६२॥
आत्मशुद्धिं कुरु व्यक्तां, शक्तः स्यादात्मशुद्धितः ॥
रमयात्मनि चेतस्त्वं, चिदानन्दं प्रकाशय ॥ १६३ ॥
जीवक !! त्वं तु जीवोऽसि, प्रकृतिर्जीववर्जिता ॥
प्रकृत्याश्रित आरोह, ब्रह्मरन्ध्रपुरं विश ॥ १६४ ॥
विना प्रकृतिसाहाय्यं, सिद्धः कोऽपि न जायते ॥
प्रकृतिस्तेऽनुकूला चे,-दुच्छ्रोत्क्रान्तिपथं मुदा ॥१६५॥
चेतनस्त्वं चिदानन्द, स्त्वं ब्रह्म प्रकृति र्जडा ॥
स्वस्य त्वं कुरु विश्वासं, स्वाश्रयत्वमुपेत्य च ॥१६६॥

गुरुकृपां विना ज्ञानं, जायते न कदाचन ॥
गुरुं विना न कोऽप्यस्ति, भगवानपरःखलु ॥ १६७ ॥

गुरुं विना न लोकानां, ज्ञानं भवति वस्तुतः ॥
अज्ञानकुहरे नित्यं, भ्रमन्ति निपतन्ति च ॥ १६८ ॥

गुरौ प्रेम्णा भवेद्भक्त, स्तया सर्वाश्च शक्तयः ॥
प्रेम्णा भक्तो गुरोर्भूत्वा, नाशकः स्यात्प्रभुः स्वयम् ॥ १६९ ॥

आत्मनः सत्यविश्वासो, भक्तानां हृदि जायते ॥
स्यादात्मा स्वात्मरूपेण, क्षीयते कर्मणोऽष्टकम् ॥ १७० ॥

आत्मा यदात्मरूपः स्यात्सिद्धो बुद्धस्तदोच्यते ॥
माया च प्रकृतिर्दूरं, ज्ञानी ज्ञानं तदाऽश्नुते ॥ १७१ ॥

आत्मज्ञानं नृपाऽऽदाय, राज्यं वह गुणालयम् ॥
तेनान्तःकामनाहीनो, वत्स्यसि लप्स्यसे सुखम् ॥ १७२ ॥

मयि पूर्णानुरागस्ते, निष्कामः सत्य एव सः ॥
स्वतन्त्रो वत्स्यसि त्वं ततु, सत्यमंत्रं प्रचारय ॥ १७३ ॥

मयि न्यस्य मनो गच्छ, त्यज त्वं विषमां धियम् ॥
समबुद्ध्या प्रवर्तस्व, प्रभुलाभाय तद्ग्रहः ॥ १७४ ॥

ज्वालय वासनां दुष्टां, सर्वत्र समतां कुरु ॥
जहि दुष्ट विचारांस्त्वं, स्वात्मशक्त्या रमस्व च ॥ १७५ ॥

जैनः स यो यदंशेन, त्यजेद्विषयवासनाम्
मयि यस्याऽस्ति विश्वासो, जैनो जिनत्वमश्नुते ॥ १७६ ॥

हृदि यस्यानुरागोऽस्ति, मत्समः सोऽतिभाग्यवान् ॥
ईक्षे वेद्म्यखिलं वस्तु, विश्वासीतिविचारतः ॥१७७॥

मच्छ्रद्धया बलं शक्तिः सर्वशक्तिश्च जायते ॥
न मच्छ्रद्धां विना धर्मः, शर्म मच्छ्रद्धया भवेत् ॥१७८॥

कुरु सन्तजने प्रेम, यापयोत्साहिजीवनम् ॥
कुरूपयोगतः कार्यं, धर्माद्राज्यं न चापरम् ॥१७९॥

उद्यमान्न निवर्तस्व, कर्तव्यान्न च्युतो भव ॥
जीव !!! विश्वोपयोगेन, सत्यज्ञानक्रिये धर ॥१८०॥

रजस्तमःक्रियाधीभ्यां, नात्मधर्मः प्रकाशते ॥
सत्त्वबुद्धिक्रियाभिस्तु, स्वात्मधर्मः प्रकाशते ॥१८१॥

सर्वं सापेक्षया विद्धि, मिथ्यात्वं निरपेक्षितम् ॥
सापेक्षयाऽखिलं सत्य, मसत्यं निरपेक्षया ॥ १८२ ॥

सापेक्षनयदृष्ट्या तु, गुणसृष्टिः प्रकाशते ।
सापेक्षो जैनधर्मोऽस्ति, मद्वचांसि प्रमाणय ॥१८३॥

कुतर्कं दूरतो मुञ्च, गर्वाटोपौ परित्यज ॥
श्रद्धा प्रीति र्हि सा भक्तिः, स्वधर्मो जायते तया ॥१८४॥

निश्चयव्यवहाराभ्यां, स्थिरः स्यात्सर्वतः स्थिरः ॥
मेरुवद्धर धैर्यं त्वं, न वैरं कुरु कैरपि ॥ १८५ ॥

आचार व्यवहारौ तु, त्याज्यौ नैव स्वधार्मिकौ ॥
यदंशै र्जीयते माया, जैनधर्मस्तदंशतः ॥ १८६ ॥

आत्मनो गुणपर्यायौ, प्रकाशेते यतस्त्विमौ ॥
एवं विचार आचारो, जैनधर्मस्य कथ्यते ॥ १८७ ॥

प्रवृत्तिर्व्यवहाराश्च, विचाराः शक्तिकारकाः ॥
स जीवन्जैनधर्मोऽस्ति, शक्तः सत्यः सनातनः ॥१८८॥

सबलो जैनधर्मोऽस्ति, निमित्ता जडशक्तयः ॥
जयत्यात्मबले जैनो, न दीनः पाशवे बले ॥ १८९ ॥

योऽवश्यं मम विश्वासी, तन्नाशो न कदाचन ॥
नासौ जगदधीनः स्या–, त्स्वातन्त्र्यं स्वं दधाति च ॥१९०

आत्मास्तित्वप्रमाणेन, पुनर्जन्माऽपि जायते ॥
तद्विश्वासी स जैनोऽस्ति, स्वात्म शक्त्या न दैन्यवान् १९१

जैना ये मम भक्ताः स्युः, स्वात्मविश्वासधारिणः ॥
कायादिशक्तिसापेक्षा, निरपेक्षाः कदापि न ॥१९२॥

आत्मशक्त्या जयोऽस्तीति, हृदि तेषां प्रतीयते ॥
विकाशयाऽऽत्मशक्तीस्त्वं, लभस्व पदमार्हतम् ॥१९३॥

स्वजनान्बोधयाऽऽत्मानं, नात्मरूपो भव स्वयम् ॥
गृहिधर्मक्रियाज्ञान, जैनधर्मोऽस्ति ते शुभः ॥१९४॥

सत्याऽहिंसाक्रियां धेहि, धर्मश्च स्वाधिकारतः ॥
धर्मः साध्योऽधिकारेण, सेव्यो देवो गुरुर्मुदा ॥१९५॥

अभयं त्वात्मदानं हि, ज्ञानदानादिकं शुभम् ॥
निर्भयोऽभयदानेन, भव जीवाधिकारतः ॥ १९६ ॥

मद्वचस्त्वखिलं सत्यं, कृत्यं धर्मजयस्य च ॥
आचारे कुरु मद्वाक्यं, राजन् धर्मं न विस्मर ॥१९७॥
न जैनधर्मनाशोऽस्ति, जैनोस्त्वनन्तकालिकः ॥
कदाग्रहस्य दूरीतिः, सत्यादिगुणतो जयः ॥१९८॥
कदाग्रहेण शान्ति र्न, मिथ्याभ्रान्ति र्हि वर्धते ॥
दूरं कदाग्रहाञ्कृत्वा, जैनधर्मोद्यतो भव ॥ १९९ ॥
त्यजाल्पविषयक्लेशं, दुष्टयंत्रं विनाशय ॥
अप्रमात्मदशा चेत्स्या-, त्सूक्ष्मतत्त्वं च भासते ॥२००॥
ज्ञास्यसि सूक्ष्मतत्त्वं त्वं, चलात्मज्ञानतः पुरः ॥
म्रियतेऽनात्मबोधेन, न स आत्मा म्रियेत यः ॥२०१॥
अज्ञानिनस्तु रोदन्ति, मृत्यो र्बिभ्यति मोहिनः ॥
न धर्ममरणे भीति, र्ज्ञानिनां रीति रीदृशी ॥२०२॥
धनादयो वहिर्द्रव्यं, तत्र स्वार्थं न मन्यते ॥
वेत्ति जीविकया स्वार्थं, परमार्थस्तु तद्धृदि ॥ २०३ ॥
निर्धर्मं जीवनं व्यर्थं, दुष्टवृत्तिं निवारय ॥
धर्मेणात्मबलोत्क्रान्ति, र्नर्द्धिरात्मर्द्धि मन्तरा ॥२०४॥
सन्ध्या रागसमा सैषा, जडर्द्धिस्तु विनश्यति ॥
जडर्द्धिं विद्धि मिथ्या हि, स्वात्मर्द्धौ मन आनय ॥२०५॥
जडेषु नास्तिको वेत्ति, ऋद्धि मात्मनि चास्तिकः ॥
नास्तिको रक्षसा तुल्यो, धर्मे जैनोऽस्ति चास्तिकः ॥२०६

दयालु र्यः स मे भक्तो, न रक्तो यश्च हिंसने ॥
दयां विना न धर्मःस्याद्, दयावृत्तिक्रियां कुरु ॥२०७॥

दयां विना न सत्यं स्याद्, सत्कृत्यं न दयां विना ॥
दया यत्र ततो धर्मः, सर्वे धर्मा दयास्थिताः ॥२०८॥

कामभोगस्य दासो य–, स्तस्य तृष्णा न शाम्यति ॥
कामभोगो विषाभोऽस्ति, तदासक्ता मृतैः समाः ॥२०८॥

कामभोगसुखस्याशा, येषां ते लोककिंकराः ॥
ते त्वात्मबलतो दूरं, नात्मतेजश्च विन्दते ॥ २१० ॥

जय कामकरीं वृत्ति, सत्यज्ञानं तथाऽऽप्स्यसि ।
धराऽऽत्मसुखविश्वास, मार्याणां जीवनं हि तत् ॥२११॥

नहि कामसमं पापं, कामो दोषस्य कारणम् ।
कामो जितो जितं सर्वं, व्यर्थगर्वो हि तं विना ॥२१२॥

कामवृत्तिं च मुञ्चाऽऽशु, दुष्टकामं नवा स्मर ॥
रत्वाऽऽत्मना समं चित्तं, जगन्नाथो भविष्यसि ॥२१३॥

मुक्तिधाम ततो यच्च, निष्काममार्यवर्तनम् ।
आर्याणां जीवनं धर्मो, न शर्माऽनार्यचेतसि ॥२१४॥

अधार्मिकस्त्वनार्योऽस्ति, त्वार्या धर्मस्य वेदकाः ।
आर्यं धर्मकरं विद्धि, विद्ध्यनार्यं च पापिनम् ॥२१५॥

आर्या जैना हि विख्याता, तत्र भक्तिं समानय ।
मयि तेषु न भेदोऽस्ति, अभेदाश्चात्मसत्तया ॥२१६॥

बन्धःस्याद्वेषरागाभ्यां, कर्माधीना हि देहिनः।
द्विड् रागौ भावकर्माऽस्ति, द्रव्यं कर्म तथाष्टकम् ॥२१७॥

अनादिकालतः कर्म–, बन्धोऽस्ति सममात्मना।
कर्मतो जन्ममृत्यादिः, पुण्यपापेऽपि कर्म हि ॥२१८॥

पुण्यं पापं द्वयं कर्म, तद्भेदा बहुधा मताः।
जीवो भ्रमति संसारे, सर्वयोनिषु कर्मणा ॥२१९॥

शुभं जन्माऽस्ति पुण्येनाऽशुभं जन्म च पापतः।
पुण्यैःश्रेष्ठगतिः सौख्यं, पापतो दुःखदुर्गती ॥२२०॥

गतागतं स्वकर्मभ्यः कीर्तिनिन्दे च कर्मतः।
शुभकर्मोदयाच्छर्मा–,ऽशुभं चाशुभकर्मतः ॥२२१॥

उदये यानि कर्माणि, न तद्भोगं विना गतिः
साम्येन भोगतः कर्म–बन्धो नात्मा सुखी भवेत् ॥२२२॥

कर्मोदयश्च साम्येन, सूते भक्तिं च निर्जराम्।
घात्यघाति तथा कर्म, घातिनाशात्प्रभु र्भव ॥२२३॥

ज्ञानेन हन्यते कर्म, स्वोपयोगे गुणोदयः।
सोपयोगी त्वबन्धः स्या–, दन्धः कर्मोदयान्न सः ॥२२४॥

शुभाऽशुभानि जन्मानि, तेषां कर्मैव कारणम् ॥
कर्मान्तान्मुच्यते स्वात्मा, ज्ञानी न विषयाश्रितः॥२२५॥

सर्वगर्वहरं कर्म, जीवा नृत्यन्ति कर्मतः ॥
बलि च पुद्गलं कर्म, व्यक्तं कर्म शुभाशुभम् ॥२२६॥

कर्मनाशो यदंशेन, स्वप्रकाशस्तदंशतः ॥
क्रियावद्गुणवत्कर्म, स्वात्मा तु निष्क्रियो मतः ॥२२७॥

कर्मणाऽऽत्मजगद्भेद–, स्तदज्ञानात्तमश्चयः ॥
नान्यायो न्याय एवाऽयं, भोगे हि कृतकर्मणाम् ॥२२८॥

महान्हि कर्मसिद्धान्त, एतत्सर्वं प्रमाणय ॥
कर्माधीनाश्च शक्राद्या, उच्चनीचादयस्ततः ॥ २२९ ॥

कर्म पुद्गलपर्याय,–स्तद्बोधात्सुखमात्मनः ॥
प्रकाशन्ते गुणाः कर्मो–, पशमादिकभावतः ॥ २३० ॥

कर्मात्मनोश्च विश्वास–, स्तदा सम्यक्त्वमीक्ष्यते ॥
असम्यगपि सम्यक् स्यात्, स्याच्चित्तमात्मसम्मुखम् २३१

आत्मा कार्येषु निष्कामः, स्वपरिणाम आत्मनि ॥
कर्मणः स्यात्तदा श्रद्धा, समभावैर्निरीक्षणम् ॥ २३२ ॥

न भवेद्वैरिषु द्वेषः, कर्मतो देहसृष्टयः ॥
वीक्ष्यते नात्मदोषस्तु, कर्मणां दोष ईक्ष्यते ॥२३३॥

रागद्वेषशमस्तेन, भवत्यात्मक्षमा स्फुटा ॥
दृश्यते नात्मदोषश्च, सन्तोषः साम्यतो भवेत् ॥२३४॥

कर्मणां सर्वखेलोऽयं, यो जानाति न मुह्यति ॥
आत्माऽरूपी च तद्धर्म, स्तल्लयेन सुखं भवेत् ॥२३५॥

आत्मधर्मात्पृथक् पुण्यं, पृथक्पुण्यसुखं तथा ॥
कर्मणैव क्रियाः सन्ति, कर्म नाऽकर्मभावतः ॥ २३६ ॥

तदेवं कर्मसिद्धान्तः, निर्भ्रमो भव जीवक ॥
त्वं त्यजाऽशुभकर्माणि, कषायानशुभांस्त्यज ॥२३७॥
सुकषायान् शुभं कार्यं, सेवा भक्त्याद्युपायकम् ॥
कृत्वाऽऽत्मनि विश प्रेम्णा, यत्प्रदेशाः सुनिर्मलाः॥२३८॥
सर्वसंगेषु निःसंगो, शुद्धमात्मानमाचर ॥
जायते केवलज्ञानं, स्वयं तेन प्रभुर्भव ॥ २३६ ॥
कर्मभावेन लीनः स्या, भिन्ने स्त आत्मकर्मणी ॥
कर्मण्यात्मतया तिष्ठ, निर्लेपार्थमिदं वचः ॥२४०॥
कर्माधीनाश्च पर्याया–, स्तेषु नात्मत्वमानय ।
आत्मरूपे निलीयस्व, कृतकर्माऽपसारय ॥२४१॥
कर्म कर्मस्वभावेन, पश्यात्मानं स्वभावतः ।
आत्मनि सत्यधर्मोऽस्ति, पुद्गलेष्वस्ति पौद्गलः ॥२४२॥
चलैवं निश्चयं कृत्वा, कुपथं कुमतं त्यज ।
प्रमीय जैनसिद्धान्तं, प्रवर्तस्व स्वबोधतः ॥२४३॥
आत्माऽस्ति सत्तया शुद्धः, प्रबुद्धः शुद्धनिश्चयात् ।
पर्यायः कर्मणाऽशुद्धो, विशुद्धः कर्मनाशतः ॥२४४॥
कर्मतो न भयं धेहि, ततोऽप्यात्मा महाबली ।
कर्मनाशं क्षणेनात्मा, करोति स्वोपयोगतः ॥२४५॥
अनन्तभवकर्माणि, क्षणे हत्वा सुखालयः ।
स्वात्मराजो बलीत्येवं, जाग्रतः स च निर्ममः ॥२४६॥

साम्येन भोगतो धर्मः, स्वोदयप्राप्तकर्मणाम् ।
यः प्राप्तकर्मणां भोगो, ज्ञानिनां योग एव सः ॥२४७॥

राज्यादिकप्रवृत्ति र्या, सेवाभक्त्यादिकं च यत् ।
तत्र ज्ञान्यात्मशुद्धि र्हि, स्याद्वृद्धिः कर्मनाशतः ॥२४८॥

आज्ञा यत्र च बध्यन्ते, निर्बन्धा स्तत्र पंडिताः ।
सुखदुःखादिभोगेन, भक्तानां ज्ञानमुद्भवेत् ॥२४९॥

न्यायेन चेद्भवेद्राज्यं, स्वाधिकारेण कर्म च ।
आत्मा न लिप्यते किन्तु, स्वासक्तिः कर्मलेपिनी ॥२५०॥

मद्भक्ता दुःखभोगेन, भक्तिमार्गं व्रजन्ति हि ।
कर्मभोग्यपि नो बद्धः, कर्मबन्धस्तु मोहिनाम् ॥२५१॥

गृहित्यागिभिदा धर्मो गुणः कर्म द्वयोः पृथक् ।
स्वाधिकारेण वर्तेते, द्वे लभेते परं पदम् ॥२५२॥

गृहादिं गृहिणां कर्तु–, मधिकारः स्वकर्मतः ।
भक्तिं सेवां क्रियां ज्ञानं, लब्ध्वा भक्तः प्रभुर्भवेत् ॥२५३

जैनानां सम्मुखे दुष्टा, भवन्ति दुष्टकर्मतः ।
तैः सार्धं च तदा जैनैः, कर्तव्यं धर्मयोधनम् ॥२५४॥

धर्म्ययुद्धे न दोषोऽस्ति, पोषस्त्वात्मगुणस्य हि ॥
बहुला निर्जरा स्याच्च, विशुद्धात्मा प्रशोभते ॥२५५॥

गृहस्थस्येदृशो धर्मः, कर्मकृत् स्वाधिकारतः ॥
संघदेशं समाजं च, स्वार्पणेन च रक्षयेत् ॥ २५६ ॥

रत्तयित्वाऽऽर्यसद्रीतिं, द्रव्यभावरिपुं जयेत् ॥
शत्रुभि र्न जितः स्याच्च, सर्वजीवान्प्ररत्तय ॥२५७॥
कुर्वत्यात्मधिया कर्म, स्वात्मशुद्धिश्च जायते ॥
तज्ज्ञानावरणीयादि,—नाशतो धर्म उद्भवेत् ॥२५८॥
पूर्णानन्दं महोऽनन्तं, वेत्ति मां स दहेद्भवम् ॥
भावकर्म निराकृत्य, स्वात्मभावः प्रकाशते ॥२५९॥
आर्यराज्यं शुभं भूमौ, प्राज्यं सत्यदयैक्यतः ॥
आर्याणां त्वमसि श्रेष्ठः, सम्यक्त्वादिगुणग्रही ॥२६०॥
रीतिरार्यसमा नास्ति, नीतिरार्यसमा नहि ॥
पूर्वतो व्यवहारोऽयं जयन्नद्यापि वर्तते ॥ २६१ ॥
एवमार्यास्तु जैनास्ते, न दीना ये मृतावपि ॥
परमार्थं हि मुञ्चन्ति, देहं जीवसहायकाः ॥ २६२ ॥
दासो न दुष्टशत्रूणां, युद्धयेच्च मरणावधि ॥
जैनो न स्यात्पराधीनो, ह्यत्यासक्तिं त्यजेत्तथा ॥२६३॥
पृथक् गच्छेन्न च न्याया, न्नान्यायं सहते तथा ॥
एतदर्थं च यत्कार्यं, शुद्धाऽऽत्मा तेन शोभते ॥२६४॥
सुकर्म हन्ति दुष्कर्म, कर्मबन्धोऽस्ति कर्मतः ॥
सात्त्विकाचारविज्ञाना, न्यात्मज्ञानस्य कारणम् ॥ २६५ ॥
न दुःखं तस्य यो वेत्ति, कर्मात्मानौ विवेकतः ॥
कर्मात्मतत्त्वबोधेन, स्वात्मतत्त्वं प्रकाशते ॥ २६६ ॥

कर्म ज्ञात्वा भवाऽकर्मा, स्वात्मशर्म तु निष्क्रियम् ॥
कर्मणः श्रद्धया साम्यं, तथा ज्ञानादयो गुणाः ॥२६७॥

कर्मात्मनोश्च संयोगा–, त्सुखं दुःखं च जायते ॥
भावकर्म व्रजेच्चित्ता, दात्मा वेद्य स्तदंशतः ॥ २६८ ॥

द्रव्यादिकर्मनाशेन, मुक्त आत्मा स्वयं भवेत् ।
कर्मतो मोचनं मुक्ति–, रुपशमादिभावतः ॥२६९॥

उपशमेन मोहादेः, क्षयोपशम तस्तथा ।
क्षायिकेणात्मशुद्धिःस्या, च्चिदानन्दः प्रकाशते ॥२७०॥

एवंविदश्च मद्भक्ता, योगं क्षेमं प्रयान्ति च ।
आत्मा हि परमात्मा स्या-, त्प्रत्यक्षः स मया समः ॥२७१॥

धीः पृथक् सर्वजीवानां, कर्मतः कुरु शुद्धताम् ।
कर्मतो भिन्नजन्मानि, तेन साम्यं न देहिनाम् ॥ २७२ ॥

स्याज्ज्ञानावरणीयादि,–नाशः सेवादियोगतः
आत्मन्येव मनो रक्ष्यं, धीरः स्यात्तत्सुबोधतः ॥२७३॥

समुद्धरात्मनात्मानं, भवपारं ततो व्रज ।
कुर्वात्मानं स्वयं द्योत्य–, मात्मानं स्वं प्रकाशय ॥२७४॥

यतस्व स्वाश्रयी भूत्वा, स्वात्मविश्वासमाचर ।
वसतीशः स्वयं देहे, स्वात्मानन्दविलासकः ॥२७५॥

अनन्ता धीमनोभेदा–, स्तेषामन्तो न विद्यते ।
प्रतिजीवं तयोर्भेदो, विद्धयात्मानं ततः पृथक् ॥२७६॥

कोटिर्बुद्धिमनोमार्गा, साम्यं नान्योन्यमीक्ष्यते ।
चित्तध्योरात्मसाम्मुख्ये, स्वात्मशुद्धिः समुद्भवेत् ॥२७७॥

आत्मात्मनि यदा रक्तो, मनोबुद्ध्योर्लयस्तदा ।
मतमार्गकलेर्नाश, आत्मानन्दः प्रकाशते ॥२७८॥

आत्मा स्वात्मस्वरूपः स्या-, द्दूरं कर्मादिकं व्रजेत् ।
आत्मा सिद्धश्च बुद्धश्च, त्रिगुणप्रकृतेः परः ॥२७९॥

आत्मज्ञानं विधेहि त्वं, स्वयं स्वध्यान माचर ।
स्वयं स्वं तारयाऽऽशु त्वं, नृजन्म सफलं कुरु ॥२८०॥

स्वात्मन्येव मनो रक्त, दुष्प्रमादान्निवारय ।
मनोनाशेन मुक्तिः स्याद्भव उच्छृंखलं मनः ॥ २८१ ॥

रागद्वेषमतिर्याव-, त्ताव च्चारोऽस्ति चेतसः ।
आत्मरूपे कुरु प्रेम, स्वात्मशक्तिं प्रकाशय ॥२८२॥

भावय सत्त्वभावं त्वं, चित्ते सद्भाव मानय ।
कर्मणामुपचारेषु, मिथ्यागर्वं न धारय ॥२८३॥

कर्मभ्यो देहि कर्मत्वं, तथात्मत्वं निजात्मने ।
धारयात्मनि रागं त्वं, मुक्तिष्ठोपशमादितः ॥२८४॥

संमुह्य मा भव क्लीबः, स्वशक्त्या जीव जीवक !!।
चिदानन्दः स्वयं त्वं तु, मिथ्या भ्रान्तिं निवारय ॥२८५॥

जीवेषु कर्मणा भेदो, जीवखेदोऽपि कर्मणा ॥
कर्मणा धर्मभेदोऽपि, ज्ञानी स्यात्कर्मसंक्षयात् ॥२८६॥

अनाद्यनन्तकालाद्धि, संसारः प्रकृते र्वशः ॥
स्वभावं प्रकृतिर्धत्ते, कर्म न त्यजति स्वताम् ॥२८७॥
सार्धं प्रकृतिशक्त्या तु, स्यादात्मा जगतः प्रभुः ॥
ज्ञानी चोन्नतिहेत्वर्थं, प्रकृतिमवलम्बते ॥ २८८ ॥
गार्हस्थ्ये कर्मसाहाय्यं, त्यागिनामपि तत्तथा ॥
एवं सापेक्षया वेत्ति, क्षेमी स स्वोपयोगतः ॥२८९॥
सर्वजीवा न कर्मान्ता, भक्ता न सर्वदेहिनः ॥
नश्यन्ति धर्मभेदा न, भेदः खेदोऽपि कर्मणा ॥२९०॥
जनान् शिक्षय राज्येषु, शिक्षयित्वा सुधारय ॥
कुरु सामादिकां नीतिं, स्याद्धर्मश्च जयस्ततः ॥२९१॥
वर्धय जैनसाम्राज्यं, जैनेषु प्रीति माचर ॥
जैनार्थं प्रेमतो धाव, पापिशत्रून्निवारय ॥ २९२ ॥
राज्यादे र्व्यवहारोऽयं, तावत्कर्तव्यमाचर ॥
शुद्धिः स्यादात्मनस्तेन, मुच्यते मोहमन्तरा ॥२९३॥
योग्यकर्मैव धर्मोऽस्ति, कर्मोत्सर्गापवादतः ॥
यत्काले यच्च योग्यं स्या-, ज्जाति धर्मश्च तद्विधौ ॥२९४॥
कर्म ज्ञात्वा प्रकारैश्च , कृतौ धर्मस्तथासुखम् ॥
एवं ज्ञात्वा अये भूप, शक्त्या साम्राज्य माचर ॥२९५॥
राजा सर्वप्रजा संघो, वृद्धिस्तेषामहर्निशम् ॥
जैना वंशक्रमेण स्यु-, रेवं राज्यं हितं कुरु ॥२९६॥

यत्र राजप्रजेऽशक्ते, ते स्यातां हि पदच्युते ॥
यत्र कामादिकोल्लासा, अन्ते पातो भवेत्ततः ॥२९७॥

यत्रातिविषयस्वार्था, अन्यायोपद्रवो यतः ॥
भवेद्राजप्रजापातो, राज्यं च परिवर्तते ॥ २६८ ॥

गच्छ सावहितो भूप, मच्छिक्षां हृदि धारय ॥
उभयोः सद्गुणो यत्र, मच्छक्तिर्जायते ततः ॥२६६॥

वृद्धिरार्यप्रजेच्छाया, यतस्तत्र व्रजाऽध्वनि ॥
भवेदार्यप्रजोत्क्रान्ति-, र्गृहाणोपाय मीदृशम्- ॥३००॥

धात्री क्रीडयते बालं, बाह्यरागं दधाति च ॥
सत्यप्रीतिस्तदन्तर्न, तथा त्यागे प्रवर्तय ॥ ३०१ ॥

मन्मना भूप वर्तस्व, विकशिष्यन्ति ते गुणाः ॥
मिथ्यागर्वो यतो नश्ये-, दात्मनिस्वार्पणं कुरु॥३०२॥

जैनाश्चेद्गुणकर्मभ्यां, जीवन्धर्मस्ततो भवेत् ॥
तत्र मच्छक्तिरायाति, शान्तिं देशप्रजाऽश्नुते ॥३०३॥

मद्गुणानुचरा जैना, दीनास्ते न कदाचन ॥
आश्रयाः सर्वशक्तीनां, जैना भवन्ति भूतले॥ ३०४॥

आत्मावलम्बनेनैव, जीवक त्वं प्रभुर्भव ॥
मच्छिक्षां प्रेमतो लब्ध्वा, लभस्व सर्वमंगलम् ॥३०५॥

त्वद्धितार्थमियं शिक्षा, कथिता मोक्षहेतवे ॥
वृणु सिद्धपदं तेन, स्यादात्मा स्वस्वरूपतः ॥ ३०६॥

वीर तेजोमय ब्रह्म, धन्योऽसि परमेश्वर ॥
बोधयामास मां देव, तेन भ्रान्ति र्गता मम ॥३०७॥

सर्वं सत्यं भवेद्राज्यं, सर्वज्ञोऽसि महाप्रभुः ॥
त्वमेवाऽसि ममाधारः, पूर्णं प्रेम मम त्वयि ॥ ३०८ ॥

त्वच्छिक्षा नयसापेक्षा, श्राऽज्ञानां निरपेक्षकाः ॥
त्वच्छिक्षा मनुगन्ताऽस्मि, कृत्वा कर्माधिकारतः ॥३०६॥

सत्तया चैक श्रात्माऽस्ति, ह्यनन्ता व्यक्तिभेदतः ॥
श्रात्मतत्त्वाखिला दृष्टि, स्तत्स्रष्टिरह माभवम् ॥३१०॥

स्याद्वादे त्वखिला धर्माः, संमान्तीति मया मतम् ॥
श्रनादिर्जैनधर्मोऽस्ति, नादि र्नान्तोऽस्ति तस्य तु ॥३११॥

तव सेवा धृता सत्या, जैनधर्मप्रकाशक ॥
उत्तारय भवाम्भोधिं, मामुद्धारय हे विभो ॥ ३१२ ॥

स्वार्पणं ते कृतं सर्वं, मिथ्याधीश्च मदो गतः ॥
प्राप्ता तव कृपा सत्या, मोहो दुःखकरो न मे ॥३१३॥

जैनधर्मस्तु विश्वेषु, सर्वजीवेषु वर्तते ॥
जयकारो भवन्नाम्ना, शिवं शान्तिः प्रकाशताम् ॥३१४॥

शुद्ध ब्रह्म जिनो वीर, यस्य शिक्षोत्तमोत्तमा ।
जीवो जीवकराजोऽस्ति, स्वान्तरात्माख्य एव सः॥३१५॥

शुद्धजीवो हि सम्यक्त्वी, स्वात्मक्षेत्रं तु भारतः ।
आत्मा जिनोऽस्ति जैनश्च एतज्ज्ञानान्न दीनता ॥३१६॥

विद्ध्यध्यात्म महावीर–,मुपयोगं हि जीवकम् ।
ज्ञानेन मंगलं पूर्णा–,नन्दरूपं प्रकाशते ॥३१७॥

अन्तिम स्तीर्थकृद्वीरो, वीर आत्माऽऽत्मभावतः ।
जानाति ह्यरीत्या यः सच ज्ञानी महान्भवेत् ॥३१८॥

यशोदास्ति सती पत्नी, सास्वयं शुद्धचेतना ।
प्रज्ञां सुदर्शनां विद्धि, भाव आध्यात्मिकोऽस्त्ययम्॥३१९॥

अन्तर्वृत्तिं सुतां विद्धि, सैवाऽस्ति प्रियदर्शना ।
सद्बुद्धि स्त्रिशला सत्य,–विवेको नन्दिवर्धनः ॥३२०॥

देहः क्षत्रियकुण्डोऽयं, सिद्धार्थोऽनुभवः पुनः
आर्यक्षेत्रं स्वदेशोऽस्ति, पूर्णानन्दो यतोऽनिशम्॥३२१॥

कुटुम्बगुणपर्याया, आत्मा वीरो जिनेश्वरः ।
वेत्ति यो द्रव्यभावाभ्या, मसावानन्दमश्नुते ॥३२२॥

अध्यात्मरूपकेणैव, वेत्त्यसौ क्षेमयोगवान् ।
आत्मनि घटते सर्वं, मिथ्या गर्वं न वा कुरु ॥३२३॥

आत्मानं बोधयेदात्मा, क्लेशं नाशयते स्वयम् ।
पश्याऽऽत्मन्यखिलं वस्तु, ज्ञात्वा भ्रान्तिमपाकुरु ॥३२४॥

विद्ध्यनाद्यन्तकालं च, स्वात्मवीरं च सत्तया ।
व्यक्तःपर्यायतःसादि–,रनादिःसत्तया खलु ॥३२५॥

जीवकबोधसच्छिक्षा, ज्ञानाद्दीक्षा प्रकाशते ।
सर्वविश्वेषु शान्तिः स्यात्तुष्टिः पुष्टिश्च शोभते ॥३२६॥

शासनं सेवते यश्च, वीरतीर्थंकरप्रभोः ।
शुद्ध आत्मा भवेत्तस्य, बुद्धः केवलबोधतः ॥ ३२७ ॥
मंगलं वीर नाम्नाऽस्तु, चानन्तानन्दकोर्मयः ।
सर्वत्र वर्तते शांति–,जैनधर्मः प्रवर्धताम् ॥३२८॥

इति जीवक बोधः समाप्तः



## ॥ आत्मस्वरूपग्रन्थः ॥

आत्मस्वरूपः समुदेति येन,
येनाऽऽत्मबोधश्च विकाशमेति ।
प्रणम्य शंखेश्वरपार्श्वनाथ,
मात्मस्वरूपं विदधामि शास्त्रम् ॥ १ ॥

शुद्धोऽथ बुद्धः परमः परात्मा,
विनाशशून्यः सच चित्स्वरूपः ।
अखण्डआनन्दगुणो विभुश्च,
विज्ञानरूपश्च सुखस्वरूपः ॥ २ ॥

परत्वजातिः परमात्मवाच्या,
ध्येयस्वरूपश्च गुणैकधाम ।
ध्यानेन सिद्धस्य सुखंकरस्य,
ध्याता भवेत्सर्वगुणैकधाम ॥ ३ ॥

स्याद्वादसिद्धान्तविकाशकारी,
निरञ्जनः पूर्णसुखस्वभावः ।
तीर्थंकरध्यानगुणस्तवाभ्या,
मपैति तद्दूरतरं विभावः ॥ ४ ॥

स्वकर्मोपाधियोगेन, स्वात्मभेद उदीरितः ।
कर्मोपाधिर्यदा नश्येद्भेदभावस्तदा व्रजेत् ॥ ५ ॥

बाह्यस्तथा स्वान्तररूप आत्मा,
तथा परात्मेतिभिदाश्च तिस्रः ।
पृथक् पृथक् लक्षणमस्ति तेषां,
ज्ञेयं स्वशास्त्रेण तथाऽऽप्तवाण्या ॥ ६ ॥

या पंचभूतेषु निजात्मबुद्धिः,
स्वात्मेति या वाऽध्यसना शरीरे ।
या वाऽऽत्मबुद्धि जंडपुद्गलेषु,
ता विद्धि बाह्यात्मधियः समग्राः ॥ ७ ॥

एतादृशी बुद्धिरुदेति येषां,
मिथ्यात्विनस्ते प्रभवन्ति सर्वे ।
स्वीकुर्वते नो निजपुण्यपापे,
परं भवानामभिनन्दनास्ते ॥ ८ ॥

यच्छारणं पानमथाऽशनं च,
जगत्सु जानन्ति तदेवसारम् ।
ये वाऽत्र बाह्यात्मधियो मनुष्याः,
कदापि नो तत्त्वधियं लभन्ते ॥ ९ ॥

स्वकीयया येच धिया चलन्ति,
कुर्वन्ति ये तर्क मथो वितर्कम् ।
ते पाप्मनां पोट्टलिकां विधाय,
मृत्वाऽऽशु तंतं नरकं विशन्ति ॥ १० ॥

तेषां नराणां ननु बाह्यदृष्टि-
र्भवेषु भूयोऽपि वृथा भ्रमान्ति ।
ये यापयन्त्येव वृथा स्वजन्म,
कथं तदर्थं क्रियतां च शोकः ॥ ११ ॥

भ्रमन्ति कायसंघेषु पृथ्व्यप्पवनतेजसाम् ।
सूक्ष्मबादरभेदाभ्या-,मपारा जीवराशयः ॥ १२ ॥

वनस्पतीनां भवतो द्विभेदौ,
प्रत्येकसाधारणनामधेयौ ।
तत्रातिवारं प्ररिबभ्रमुस्ते,
लब्ध्वा विचित्रान्विविधाँश्च खेदान् ॥ १३ ॥

प्रापुश्च बाह्यात्मपदं ततोऽपि,
स्वात्मावबोधं न च तेऽवजग्मुः ।
शुद्धाश्च बुद्धा भगवन्त एते,
भ्रान्ता बृहत्कर्मभिरेव नित्यम् ॥ १४ ॥

अनन्तकालं च ततोऽवतस्थौ,
दुःखं प्रतिश्वास महो यतोऽस्ति ।
योगेन भूयो भवितव्यताया,
श्चक्रे तथा द्वीन्द्रिययोनिवासम् ॥ १५ ॥

विचित्रदेहान्परिबभ्रुरेते,
तत्राऽपि योगेन च रूपनाम्नोः ।

ने त्रीन्द्रिये वा चतुरिंद्रिये वा,
निःसंख्यदुःखात्रभुजो बभूवुः ॥ १६ ॥

स्वं स्वं परिभ्रम्य समग्रयोनौ,
पंचेन्द्रिये जन्म दधार कश्चिद् ।
पंचेन्द्रिये सन्तिभिदाश्चतस्त्रो,
देवादिकांस्तान्हृदि वित्त विज्ञाः ॥ १७ ॥

अनन्तकालाः प्रसभं व्यतीता,
बाह्याऽऽत्मबुद्धौ भवतां निरर्थम् ।
भेदावबोधस्य विनैकयोगं,
न स्वात्मशुद्धिं लभते मनुष्यः ॥ १८ ॥

परोभवः केन जनेन दृष्टः,
कस्येश्वरो दृष्टि पथं प्रयाति ।
पानं तथा भोजनधारणे च,
सत्यं वचो नास्तिकवादिनोक्तम् ॥ १९ ॥

दृग्गोचरे स्तो नहि पुण्यपापे,
स्वर्गं च विज्ञापय बन्धुराज ।
पुण्यस्य पापस्य च कल्पना या,
प्रवर्तते भूमिषु वञ्चना सा ॥ २० ॥

भ्रान्ताः स्ततो मुग्धजना भवन्ति,
निरर्थकं ते च विचारयन्ति ।

ये नाम बाह्यात्मधियो मनुष्याः,
कथं तरिष्यन्त्यथ ते भवाब्धिम् ॥ २१ ॥

दानेन किं स्यात्तपसा तथा किं,
जापेन किं वा व्रतसाधनेन ।
धूर्तैः कृता केवल कल्पनेयं,
मुग्धा जनास्तत्र परिभ्रमन्ति ॥ २२ ॥

एतत्समाः सन्ति धियस्तु येषां,
ते सन्ति बाह्यात्मधिय स्तु दीनाः ।
न धर्मगुह्यं च विदन्ति किञ्चिद्,
यतस्तु ते सद्गुरुसंगहीनाः ॥ २३ ॥

यः पंचतत्त्वात्मकपुद्गलोऽयं,
देहः स आत्मेति विचारयन्ति ।
अस्माच्छरीरात्पृथगस्ति, नात्मे-
ति नास्तिका ह्यवधारयन्ति ॥ २४ ॥

सद्युक्तिसूक्ष्मप्रतिभे विनाऽय,
मात्मा न च ज्ञानसुगोचरः स्यात् ।
जडास्तु येऽनात्मविदो मनुष्या-
स्ते भूरिशो भूरिभवे भ्रमन्ति ॥ २५ ॥

श्रीवीतरागस्य विभोर्वचोभि,
र्ज्ञातं भवत्येव समग्रमेतत् ।

संगेऽयमात्मा च सतां गुरूणां,
स्याद्वादरूपत्वमथ प्रयाति ॥ २६ ॥

अनन्तकालं भ्रमितो भवेषु,
तत्त्वप्रतीतिर्न तथाऽऽविरासीत् ।
विनाऽऽत्मतत्त्वावगमं जगत्सु,
नायाति नाशं भवभूतभीतिः ॥ २७ ॥

कर्तारमीशं ननु मन्यतेऽसौ,
स्वकीयबुद्ध्या जनता जगत्सु ।
न तत्त्वमार्गं गणयन्ति मूढा,-
स्तेषां च विद्या सकला निरर्था ॥ २८ ॥

बाह्यात्मनां सम्प्रति वासना या,
भवाम्बुधे मूलमियं हि दीर्घा ।
मोहासवस्वादनतस्तु नूनं,
चक्रे महाभ्रान्तिमिमामसीमाम् ॥ २९ ॥

यदा यदोदेति विवेकदृष्टि,-
र्ज्ञातं भवत्येव तदा समग्रम् ।
भेदावबोधस्य च योजनेयं,
न्यायो यथाऽत्रास्ति तु हंसचञ्चुः ॥ ३० ॥

त्वं पंचतत्त्वादतिभिन्न एव,
चेतस्तु तच्चेतन विद्धि सत्यम् ।

यथाऽरणौ तिष्ठति वह्निदेव,–
स्तथा शरीरेष्वयमाऽऽत्मदेवः ॥ ३१ ॥

भूतेषु पंचस्वपि विज्ञलोकै,–
र्दृष्टो न च ज्ञानगुणः कदाचित् ।
न पंचभूतानि मृते शरीरे,
चैतन्यशक्तिं च समानयन्ति ॥ ३२ ॥

चेष्टा यतो दुःखसुखादिकानां,
जानाति यो दुःखसुखेऽपि नित्यम् ।
जानाति यः शीतगुणं च तापं,
तृषां तथा रोग मथो बुभुक्षाम् ॥ ३३ ॥

देहेषु तद्व्यापकमाऽऽत्मतत्त्वं,
विचार्यतां सम्प्रति बुद्धिमद्भिः ।
आत्मा असंख्यातप्रदेशरूपो,
नित्यस्तथा शाश्वतनिर्विकारः ॥ ३४ ॥

चिच्छक्तिरेषा प्रतिचेतनं तु,
प्रवर्ततेऽनादित एव कालात् ।
जडस्वरूपं खलु पंचतत्त्वं,
न कश्चिदायाति तदत्र बाधः ॥ ३५ ॥

परोभवः केन जनेन दृष्ट,
इत्युत्तरन्त्वेवमिदं चकास्ति ।

सर्वज्ञदेवेन स आलुलोके,
श्रीकेवलज्ञानविलोकनेन ॥ ३६ ॥

कुत्रेश्वरो दृष्टिपथं प्रयाती-
त्येवं वचो धीविकला वदन्ति ।
सज्ज्ञानदृष्ट्या सकला भवन्ति,
जायेत वस्तत्र हठाग्रहः कः ॥ ३७ ॥

प्रत्यक्षलक्ष्यं खलु यद्यदस्ति,
तदेव वश्चेत्परमं प्रमाणम् ।
पितामहा ये भवतामभूवन्,
किन्तत्र युष्माकमहो प्रमाणम् ॥ ३८ ॥

परम्पराभिः सकला भवन्ति,
चेन्मानसं व स्तदुरीकरोति ।
परम्पराभिर्यदि तीर्थनाथं,
मन्येत तत्क्लेश इहास्ति वः कः ॥ ३९ ॥

तीर्थङ्करः सर्वविदस्ति भूमा,
सत्यस्वरूपं प्रकटीकरोति ।
ददर्श देवः स समग्रासिद्धान्,
सच्छाश्वतांच्छुद्धमयाश्रितस्तान् ॥ ४० ॥

तीर्थङ्करोऽसौ परमेश्वरोऽस्ति,
शिवाख्यपुर्याः परमो महीपः ।

पश्यन्ति तं ज्ञानिजनाः परेशं,
मूढो जन श्चेतसि तुष्णिमास्ते ॥ ४१ ॥

दृग्गोचरे स्तो न हि पुण्यपापे,
सैषाऽपि शङ्का तव युक्तिहीना ।
वाय्वादयो दृष्टिपथं न यान्ति,
तान्वा प्रवीणाः कथमामनन्ति ॥ ४२ ॥

न पुद्गलस्कन्धचयोऽपि कश्चित्,
प्रेक्षावतां दृष्टिपथं प्रयाति ।
स्पष्टास्तथा केचिदथो भवन्ति,
न किन्तु ते दृष्टिपथं प्रयान्ति ॥ ४३ ॥

स्पष्टे तथा स्तो ननु तापशैत्ये,
न किन्तु ते स्तः क्वचिदागृहीते ।
असातसाताभिधपुद्गला ये,
फलोदये ते प्रमितिं प्रयान्ति ॥ ४४ ॥

उत्पद्यते कोऽपि भवी मनुष्यः,
पुण्यप्रकर्षै स्त्रिदशालयेऽपि ।
अत्युग्रपापै र्नरकेऽपि कश्चि,-
दाश्चर्यमायाति किमत्र विद्वन् ! ॥ ४५ ॥

कल्पनां नरकं स्वर्गं, मन्यन्ते मूढचेतसः ।
अन्यथा सत्यरूपं न, रहस्यं चैतदान्तरम् ॥४६॥

सज्ज्ञानिभिः सर्वमिदं च दृष्टं,
स्वर्गस्तथाऽयं नरकश्च साक्षाद् ।
सर्वज्ञदृष्टेरिदमस्ति दृश्यं,
जगत्समग्रं सचराचरं च ॥ ४७ ॥

चन्द्रग्रहोऽयं तपनग्रहो वा,
सूत्रैः स्वयं सूत्रकृता बभाषे ।
स्वर्गोऽपि तद्वन्नरकोऽपि तद्वत्,
सत्यत्वत स्तद्धृदि वित्त विज्ञाः ॥ ४८ ॥

प्रयोजनं ज्ञानवतां किमस्ति,
यदर्थमेवं परिकल्पयन्ति ।
रागो न रोषो न विभाति येषां,
ख्याताश्च ते भूमिषु सत्यवाचः ॥ ४९ ॥

दानेन किम्वा तपसाऽपि किम्वा,
जापेन किम्वा व्रतसाधनेन ।
प्रकुर्वते मुग्धजनाः कुतर्कं,
न जायते तद्धिषणा स्थिरा भोः ॥ ५० ॥

दानेन सर्वेप्सितमस्ति लभ्यं,
दानेन संसिद्ध्यति चाऽपि सर्वम् ।
उत्पद्यते स्वोत्तमजातिगेहे,
सर्वं तदेतन्महिमाऽस्ति तस्य ॥ ५१ ॥

उत्पद्यते राजगृहेऽपि कश्चित्,
कश्चित्पुनर्भिक्षुकजीर्णकुट्याम् ।
दानोत्थपुण्यस्य विनोररीस्यान्,
न्यायालये सन्तमसं तमश्च ॥ ५२ ॥

व्रतेन दानेन तपोजपाभ्यां,
पुण्यस्य बन्धो भवति स्फुटश्च ।
तस्यानुसारं लभते च जन्म,
सद्युक्ति मेतां हृदये कुरुष्व ॥ ५३ ॥

पाश्चात्यलोकैः सह सङ्गमेन,
वैकल्यमाप्नोति सतां च बुद्धिः ।
आप्तोक्तशास्त्रश्रवणं विना स्या,
त्सदैव ते नास्तिकता मनस्सु ॥ ५४ ॥

करोति संगं न च सद्गुरूणां,
सद्ग्रन्थपाठं न तथा करोति ।
सदा पुरस्कृत्य मतिं स्वकीयां,
सदैव मूढः कुपथे प्रयाति ॥ ५५ ॥

न दीर्घदृष्टिः समुदेति येषां,
तत्त्वावबोधोऽपि तथा न येषाम् ।
सुधारयन्ते किमिहाऽतिमूढा;
निर्बुद्धयः कौशलशक्तिशून्याः ॥ ५६ ॥

नेदं पुनर्जन्म च सिद्धमस्ती,-
त्येवं जनाः केऽपि समुद्गिरन्ति ।
प्रवर्तते सत्यवचो न तेषां,
विचार्य सत्यं हृदि सूचयामः ॥ ५७ ॥

अनादिकालाद्यदि सिद्ध आत्मा,
तदा पुनर्जन्म कथं न सिद्धम् ।
विना पुनर्जन्मनि संस्कृतिं वा,
कथं शिशोः स्तन्यगतिः प्रसिद्धा ॥ ५८ ॥

उत्पद्यते कोऽपि विहीनचक्षु-
रुत्पद्यते कोऽपि विहीनपादः ।
एतत्पुराजन्मकृतैश्च पापैः,
संजायते न्यूनशरीरवत्त्वम् ॥ ५९ ॥

सुशोकिनः केऽपि जना भवन्ति,
भवन्ति केचिद्बहुरोगिणश्च ।
तत्पूर्वजन्मार्जितपापजालै-
रनेकसन्तापमहो लभन्ते ॥ ६० ॥

उदेति जातिस्मरणं च यस्माद्,
सिद्धा पुनर्जन्मकथा च तस्माद् ।
तस्मात्पुनर्जन्मविनाशनाशा-
दनादिरात्मा स्वयमेव सिद्धः ॥ ६१ ॥

जहाति धत्ते वसनं तथापि,
न जायतेऽन्यो मनुजः कदाचिद् ।
देहं च गृह्णाति जहाति वाऽऽत्मा,
स एव चाऽऽत्मा न च कश्चिदन्यः ॥ ६२ ॥

समाधिना योगसहायभाजा,
योगी पुनर्जन्म सुखेन वेत्ति ।
ज्ञानेन जानाति जगत्स सिद्धः,
साक्षात्तथा स्वानुभवेन विद्वान् ॥ ६३ ॥

क्रोधः पुनर्जन्मजसंस्कृतेःस्या-
त्सिद्धस्तथा भीमभुजङ्गमेषु ।
एवं च तन्नास्तिकवादितर्कं,
देशादमुष्मात्तु बहिश्चकार ॥ ६४ ॥

तत्पंचभूतात्पृथगेष आत्मा,
सच्चेतनो दृष्टिपथं न याति ।
वा पंचभूतात्मकयोगजन्या,
सा चेतनाशक्ति रुदेति काऽपि ॥ ६५ ॥

यः पंचभूतात्मकयोग एषः,
स एव मे चेतनशक्तिवेत्ता ।
क्व पंचभूतात्मकयोगमेतं-,
विना भवेच्चेतनशक्तियोगः ॥ ६६ ॥

पंचभूतस्य संयोगा—दात्मसंज्ञाऽस्ति चाऽऽत्मनः ।
पंचभूतवियोगेन, चेतनाऽपि विनश्यति ॥ ६७ ॥

चेत्पंचभूतान्यधिकानि किम्वा,
न्यूनानि तेभ्यस्तु विचित्रसृष्टिः ।
अन्धश्च कश्चिद् बधिरश्च कश्चित्,
कश्चित्तथा विक्लववाग् मनुष्यः ॥ ६८ ॥

उत्कृष्टनिष्कृष्टसमीरयोगा—
च्छुद्धोऽथ विक्षिप्तमति श्च कश्चिद् ।
पञ्चेन्द्रियाणामथ शक्तय श्च,
ताः शक्तिभूतेतिपदेन वाच्याः ॥ ६९ ॥

भोः पंचभूतानि मृते शरीरे,
संयोगतश्चाऽपि भवन्ति तानि ।
न ज्ञातृता तत्र चकास्ति काचि—
ज्जडत्वतः किन्तु विलोकितानि ॥ ७० ॥

तत्पंचभूतात्पृथगेतदात्म,—
द्रव्यं तदेतद्धृदि वित्त विज्ञाः ।
धूर्तैः कृतात्कोटिकुतर्कतोऽपि,
सिद्धान्ततो नैव चलन्ति भव्याः ॥ ७१ ॥

आत्मा न यस्मादुदपद्यताऽसौ,
तस्मादजोऽयं कथितो यतीन्द्रैः ।

रूपं न यस्मादिदमात्मनोऽस्ति,
तस्मादरूपी कथितो मुनीन्द्रैः ॥ ७२ ॥

स्कन्धं च कर्मात्मकपुद्गलानां,
संगृह्य संगृह्य स जन्म धत्ते ।
आत्मा स्वयं निश्चयतोऽस्त्यरूपी,
रूपी पुनः संव्यवहारतोऽस्ति ॥ ७३ ॥

संजायते कर्मत एव चान्धो,
मूकश्च कश्चिद्बधिरश्च कश्चिद् ।
यश श्च मानं च निजापकीर्तिः,
सर्वन्त्विदं चेतन एव विन्ते ॥ ७४ ॥

उत्कृष्टनिष्कृष्टसमीरयोगा–
च्छुद्धोऽथ विक्षिप्तमतिश्च कश्चिद् ।
प्रलापिनस्त्वेव मुदीरयन्ति,
सर्वन्त्विदं मे वितथं विभाति ॥ ७५ ॥

कर्मोदयेनाऽपि निमित्तयोगैः,
संजायते च ग्रथिलो मनुष्यः ।
आत्मा स्वयं विस्मरति स्वभावं,
विक्षिप्तचित्तं तु जगद्ब्रवीति. ॥ ७६ ॥

स कर्मकर्ता सहि कर्मभोक्ता,
यश्चेतन स्तं हृदि वित्त विज्ञाः ।

यद्वा पुनर्जन्मनि सत्प्रमाणं,
प्रमाणितं तत्प्रथमं मया तु ॥ ७७ ॥

मया पुनर्जन्मप्रमेयसिद्धि–
रात्माख्यग्रन्थे लिखिता विचार्य ।
ज्ञात्वा स्वयं ज्ञानिजनश्च सत्यं,
प्रवर्तते मुक्तिपथानुयायी ॥ ७८ ॥

श्रद्धा दृढा चेत्प्रभवेज्जनानां,
तदा तु सम्यक् सकलं विभाति ।
ये सन्ति वा दुर्भविनो मनुष्याः
श्रद्धा कदाचिद्धृदये न तेषाम् ॥ ७९ ॥

भवन्ति सरला वक्रा मिष्टान्नं जायते विषम्–
सदा दुर्भविजीवाना मन्धकारोऽन्तरे हृदि ॥८०॥

कोऽहं च मे कः किमिदं च दृश्यं,
नैषां च भावः हृदयेऽपि कश्चिद् ।
या बाह्यदृष्टेर्ननु वासनेयं,
प्रवर्तते सा वहिरात्मधाम ॥ ८१ ॥

परेशकर्तृत्वमतानुगानां,
वाह्याऽऽत्मनां स्यात्परमो विनोदः ।
आत्मा हि साक्षात्परमः पराऽऽत्मा,
विनेति विज्ञानमथोऽन्धकारः ॥ ८२ ॥

न रागरोषौ भवतो यदन्त,
दैंहेन शून्यो भगवान्स साक्षाद् ।
कार्यै विना तत्समवायिहेतुं,
निमित्तहेतोः कथमस्ति धाम ॥ ८३ ॥

अनादिकालाज्जगदस्ति सत्यं,
स्वयं च तत्सिद्धमिदं च वित्त ।
कर्ता न तस्य प्रभुरस्ति कश्चि-
देवं स्वचित्ते धियमानय त्वम् । ॥ ८४ ॥

अनादिकालात्परिणामभाजी,
चाशुद्धतत्त्वपरिणामयोगात् ।
देहादिकानामयमस्ति कर्ता,
स्वात्मेति कर्तृत्वपदप्रयोगः ॥ ८५ ॥

आत्मा स एवाऽस्ति परो महेशः,
सत्तानयेनेतिबुधैः प्रणीयम् ।
स्वर्णं यथा शुद्धमशुद्धमस्ति,
न्यायं च सद्युक्तियुतं गृहाण ॥ ८६ ॥

स्वतः परेषां परिणामयोगा-
त्स एव आत्मा परकारकोऽस्ति ।
स शुद्धतत्त्वपरिणामवाँश्चे-
त्स्वेषां गुणानां हि तदाऽस्ति कर्ता ॥ ८७ ॥

स ईश्वरःकर्मविवर्जितोऽस्ति,
स कारकःस्याच्च कथं परेषाम् ।
कर्ता परेषां स तु बाह्य आत्मा,
सम्यक्प्रमाणःपरमार्थ एषः ॥ ८८ ॥

आत्मा तु मिथ्यापरिणामतःस्या-
त्षट्कारकाणां व्यवहारभाजी ।
स शुद्धतत्त्वपरिणामकर्ता,
शुद्धत्वतो वै परिणामवान्स्यात् ॥ ८६ ॥

आत्मानं मन्यते कश्चित् सर्वत्र व्यापकं प्रभुम् ।
एकमात्मानमेवाऽसौ मुक्तं बद्धं च मन्यते ॥ ६० ॥

एते परात्मप्रतिबिम्बभाजो,
जीवा अनेके ननु ये च सन्ति ।
जीवत्वनाशे सति सैव आत्मा,
भवत्यशेषः परमात्मदेवः ॥ ६१ ॥

नैवंविधं वर्तत आत्मतत्त्वं,
सर्वेषु यत्तस्य भवेद्विभुत्वम् ।
एकं भवेच्चेज्जगदात्मतत्त्वं,
दुःखं सुखं वा न तदा घटेत ॥ ६२ ॥

एकस्य बन्धेन समग्रबन्ध,
श्चैकस्य मोक्षेण समग्रमोक्षः ।

स सत्तया संग्रहतोऽपि चात्मा,
स्याद्व्यापकश्चेतनशक्तिवाँश्च ॥ ९३ ॥

तदात्मतत्त्वं प्रतिकायमस्ति,
पृथक् पृथक् चेति वदन्ति सन्तः ।
व्यक्तित्वतस्तु सकला हि भिन्ना,
स सत्तयैको गुणसाम्यत श्च ॥ ९४ ॥

आत्मा स साक्षात्परमः पराऽऽत्मा,
चानन्तमात्मानमवेत विज्ञाः ।
कर्मक्षयेणैव स शुद्ध आत्मा,
बुद्ध श्चिदानन्दमयश्च देवः ॥ ९५ ॥

स्वस्वामिभावः शिवधाम्नि चास्ती,
त्येवं च केचित्सुधियः प्रणेदुः ।
कर्मक्षयेणैव स सन्निभः स्या–
न्न भिन्नता तत्र विलोक्यते च ॥ ९६॥

जीवेशमायात्रयभेदवादो,
जगत्सु सर्वत्र विलोक्यते च ।
जीवो न चेशो भवति न चेशो,
जीवः कदाचिद्भवतीति सिद्धम् ॥ ९७ ॥

मायावशा जीवगणाश्च सन्ति,
मायोपरि श्रीभगवान्महेशः ।

हे सेवका एव वेत्य चित्ते
सदा कुरुध्वं जगदीशभक्तिम् ॥ ९८ ॥

सम्यग्ज्ञानं विना केचि–त्प्रवदन्ति मुधा वचः ।
सम्यग्दृष्टिर्भवेद्येषां, तेषां सम्यग्विवेचनम् ॥९९॥

जीवेशभेदस्तु स माययैव,
प्रत्यक्षयोग्यो भवतीति चेद्धोः ।
ज्ञानादयः सन्ति गुणा द्वये हि,
कथं तदा स्यादनयोश्च भेदः ॥ १०० ॥

जीवेशभेदः खलु माययैव,
विभावनीयश्च बुधै र्यथार्थः ।
जीवः परेषां परिणामवान्य-
स्तदन्य ईशः क इहाऽस्ति खेदः ॥ १०१ ॥

जडस्वरूपा त्वियमस्ति माया,
वाच्या कथं सा ननु चेतनेति ।
जीवेशयोश्चेतनशक्तिरस्ति,
तच्चेतनां तां हृदि वित्त विज्ञाः ॥ १०२ ॥

अनित्य आत्मेतिविचारणेन,
युक्तो विचारो नहि कश्चिदस्ति ।
जन्मान्तरे यत्स्मरणं जनानां,
तदात्मनित्यत्वत एव विद्धि ॥ १०३ ॥

आत्मा यदा स्यात्क्षणिक स्तदा स्या,
द्बद्धश्च कः कैः कृतकर्मभिस्सः ।
कुर्वीत कश्चिच्च कृतस्य भोगं,
भुञ्जीत कोऽपीति महत्यनीतिः ॥ १०३ ॥

क्षणे क्षणे चास्य विचारराशि,
रुत्पद्यते चाशु विनाशमेति ।
नित्यो निजात्मेतिविचारणेन,
कथं तदुत्पादविनाशभावः ॥ १०५ ॥

भूते भविष्ये सपदि त्रिकाले,
य एकरूपः स हि नित्य आत्मा ।
न यत्स्वरूपं परिवृत्ति मेति,
नित्यं तदेवाऽस्ति जगत्सु वस्तु ॥ १०६ ॥

चेन्नित्य आत्मा भवतीति तत्किं,
विचारराशिः परिवृत्तिमेति ।
विचारराशिः परिवर्तते चे-
त्स नित्य आत्मा कथमस्ति तर्हि ॥ १०७ ॥

यतोऽस्त्यनित्यस्तत एव चात्मा,
क्षणे क्षणेऽसौ परिवृत्तिमेति ।
प्रवर्तते चात्मविचारराशि-
र्न्यायः स एषः क्षणिकाभिधानाम् ॥ १०८ ॥

सम्यग् गुरोर्भूतकृपाकटाक्षै-
र्वेदाम्यहं निश्चित मात्मतत्त्वम् ।
चेत्सत्ययुक्त्या हृदि धारयेत,
तदा हि भव्यत्व मुदेति चित्ते ॥ १०६ ॥

एकान्तपक्षं हृदये निधाय,
अनित्य आत्मेति विचारयेत,
विज्ञा अनेकान्तविचारणेन,
दक्षप्रमाणं सबलं दधन्ति ॥ ११० ॥

नित्योऽयमात्मा बुधसार्वभौमै,
र्द्रव्यार्थिके नीतिदलेऽस्ति वाच्यः ।
तथाऽयमात्मा कथितोऽस्त्यनित्यः
शास्त्रोक्तपर्यायनयेन विज्ञैः ॥१११॥

ललन्तिकाकङ्कणमुर्मिकेति,
सुवर्णपर्याय इदन्तु सर्वम् ।
भिन्नत्वतस्तत्परिवर्त्ततेऽथो,
स्वर्णत्वमस्त्येव तथाऽपि तत्र ॥ ११२ ॥

अनेकपात्राणि च पार्थिवानि,
न तत्र पृथ्वी परिवर्तते च ।
ज्ञानं परं तत्परिवर्तते हि,
तथा निजात्मा परिवर्तते न ॥ ११३ ॥

ज्ञानस्य तत्तत्परिवृत्तितस्तु,
स्वयं निजात्मा परिवृत्तिमेति ।
मृद्द्रव्यपर्यायविनाशतः स्या–
त्त्वयस्त्वनश्यं ननु मृत्तिकायाः ॥ ११४ ॥

न मृत्तिकाऽसौ परिवर्तते तु,
भवेत्कथं तच्क्षणिकोऽयमात्मा ।
पर्यायतोऽयं तु भवेदनित्यो,
द्रव्यार्थिके नीतिदले तु नित्यः ॥ ११५ ॥

नित्यानित्योऽयमात्माऽस्ति विविच्य हृदये वह ।
स्याद्वादमतबोधेन चिदानन्दश्रियं भज ॥११६॥

आत्माऽस्ति किम्वस्तु तदस्य भानं,
प्रवर्तते यस्य न चित्तदेशे ।
इतस्ततो धर्मपदं वदन्तो,
भ्रमन्ति बाह्यात्मधियो मनुष्याः ॥ ११७ ॥

न जातिवंशेषु चकास्ति धर्मो,
बाह्यक्रियायां नच कोऽपि धर्मः ।
विनात्मतत्त्वग्रहणं तदेत,
द्ध्याद्यात्मबोधायतनं चकास्ति ॥ ११८ ॥

पुण्योदयात्सद्गुरुसंगमः स्या–
द्विना प्रयासेन जगत्सु विज्ञाः । !!!

भेदावबोधस्य विधाय युक्तिं,
गृह्णाति तत्त्वं विरलो मनुष्यः ॥ ११६ ॥

श्रीसूर्यनारायणतेजसा तु,
विनाशमेतिस्वयमन्धकारः ।
अन्तस्तमः किन्तु न सूर्यभासा,
कदापि दूराय गतिं करोति ॥ १२० ॥

परं महासद्गुरुसंगमेन,
अन्तस्तमो नाश मुपैति शीघ्रम् ।
श्रीसद्गुरुर्जंगमकल्पवृक्षो,
भवन्तु तत्सद्गुरुदेवदासाः ॥ १२१ ॥

निजाऽऽत्मनोऽसावुपकारको य–
त्सत्यं ततः सद्गुरुधर्मदेवः ।
सेवध्वमेनं करणत्रयेण,
यतो दुरभ्यास उदेतु नैव ॥ १२२ ॥

मिथ्या कुतर्कं किमुवा कुरुध्वं,
शीघ्रं मृषावाद मुदेजयध्वम् ।
गुरोरधीनं कुरुताऽऽत्मचित्तं,
शुद्धं च हार्दं सततं लभध्वम् ॥ १२३ ॥

मायासु भूत्वा प्रथमं हि मग्ना,
श्चित्ते स्वकीये किमु धत्त मानम् ।

गुरोरधीनं कुरुताऽऽत्मचित्तं,
स्वर्गेहभानं च ततो लभध्वम्     ॥ १२४ ॥

श्रद्धा गुरो र्यस्य चकास्ति चित्ते,
वा यस्य चित्ते गुरुभक्तिरस्ति ।
तस्यानुसारेण जगत्सु कश्चिद्,
भवी मनुष्यो लभते च तत्त्वम् ॥ १२५ ॥

प्राणाधिकः प्राणसमाधिको वा,
पुत्राधिको यस्य गुरौ च रागः ।
वाचा गुरोः सद्गुणधर्म माप्य,
सौभाग्यभोगं लभते मनुष्यः     ॥ १२६ ॥

चेतस्यऽसंख्यात्मप्रदेशरूपं,
तदात्मतत्त्वं प्रविचारयध्वम् ।
आत्मा हि साक्षात्परमात्मदेवः,
स एव शुद्धो भगवाँश्च बुद्धः     ॥ १२७ ॥

पादाच्छिरो व्याप्य च दर्शनार्हो,
यो वर्तते पुद्गलरूपिदेहः ।
खड्गो यथा वर्तत आत्मकोशे,
तथा निजात्मा वसति स्वदेहे     ॥ १२८ ॥

न चेन्द्रियाणां निचयो निजात्मा,
आत्मा यतो वाङ्मनआदिभिन्नः ।

ज्ञातं च येनान्तर मात्मतत्त्वं,
तज्ज्ञानिनां लक्षणमस्ति वित्त ॥ १२६ ॥

लेश्याख्ययोगोऽपि नचाऽऽत्मतत्त्वं,
न वर्गणाश्चाऽपि तदात्मतत्त्वम् ।
ज्ञातं च येनान्तर मात्मतत्त्व,
मिदं च तस्यैव विभाति रूपम् ॥ १३० ॥

निजस्वरूपस्य विधायकोऽस्ति,
स निश्चलः शून्यकल श्चिदात्मा ।
सच्छाश्वती तस्य अनन्तशक्ति-
र्ददात्यसौ स्वीयगुणस्य दानम् ॥ १३१ ॥

स निर्मलो निश्चल आश्रयश्च,
स सर्ववेत्ता न जडेन वेद्यः ।
किञ्चिद्विकारोऽपि यतोऽस्ति नैव,
निष्कृष्टसूक्ष्मादपि सोऽतिसूक्ष्मः ॥ १३२ ॥

अनादिकालोद्भवयोगतश्च,
पीनोऽस्ति मिथ्यापरिणामतोऽयम् ॥
संगृह्य कर्मात्मकपुद्गलांश्च,
जिनोऽपि जातस्त्वतिदीनदीनः ॥ १३३ ॥

संगेह्युषित्वा जडपुद्गलानां,
स व्यस्मरत्स्वीयगुणस्य भानम् ॥

त्यक्त्वा गुरूणां वचनामृतं च,
विषस्य पानं विदधे शरीरी ॥ १३४ ॥

आविर्भावतिरोभावौ सत्ताऽव्यक्ताविमौ मतौ ।
स्वकीयर्द्धितिरोभावस्तस्य हेतुः प्रमादता ॥१३५॥

परान्स्वकीयानवबुध्य सोऽहं,
परप्रदेशे भ्रमणं चकार ॥
संमोहमायासु विभूय मत्तः,
क्लेशाननेकान्विविधाँश्च लेभे ॥ १३६ ॥

अहर्निशं रागगतो बभूव,
यतस्ततोऽहं भ्रमणं चकार ॥
रागस्य रोषस्य च योगहेतोः,
कर्म गृहित्वा तु लभेऽतिदुःखम् ॥ १३७ ॥

यथाऽस्ति बुद्धो भगवान्परात्मा,
सिद्धादयश्चाऽपि यथा भवन्ति ॥
आत्माऽहमप्यस्मि तथैव नास्मि-
न्नुत्कृष्टनिष्कृष्टविधे न भेदः ॥ १३८ ॥

यथा निजस्वप्नदशासु चित्तं,
चांचल्य मेवालभते न शान्तिम् ॥
स्वस्वप्नसृष्टिं बहु भाषते च,
तज्जागृते दूरतरं प्रयाति ॥ १३९ ॥

तथैव चायं ननु बाह्य आत्मा,
दशामनेकां विविधां च वेत्ति ॥
यदाऽन्तरात्मा भवति स्वबोधा-
त्तदा न कश्चिद्धृदि तस्य खेदः ॥ १४० ॥

यो ज्ञानवानस्ति निजान्तरात्मा,
स्वपीति सोऽयं परभावमध्ये ॥
तथा स जागर्ति निजस्वरूपे,
स्वभाव एषः खलु चेतनस्य ॥ १४१ ॥

चतुर्थं च गुणस्थान-मारभ्याऽयं स्वचेतनः ॥
द्वादशस्थानपर्यन्त-मन्तरात्मैव कथ्यते ॥ १४२ ॥

अन्तरात्मिकयोगेन सम्यक्त्वी कथ्यते जनः ।
अन्तर्वृत्तिस्तु चैतेषां भिन्नत्वेन परीक्ष्यते ॥१४३॥

रसो विषाभो विषयस्य येषां,
रंगो न येषां परपुद्गलानाम् ॥
वैराग्यमेवास्ति मनस्सु येषां,
मज्जन्ति धन्याः समताद्युनद्याम् ॥ १४४ ॥

साम्यं सुवर्णोपलयोश्च येषां,
येषां समौ निन्दकवन्दकौ च ॥
निजान्तरात्मासुमतां जनाना-
मभ्यास एवं खलु वर्तनीयः ॥ १४५ ॥

ज्ञानं च तस्याऽऽचरणं च सेवा,
तथोपयोगः स्थिरभावतः स्याद् ॥
भोगो भवेदौदयिकाख्यभावे,
यथास्ति योगो जलपङ्कजानाम् ॥ १४६ ॥

स्यादात्मतत्त्वस्य विचारणा च,
ध्यानं च धर्मस्य भवेत्स्वचित्ते ॥
आर्तस्य रौद्रस्य तथा विमोके,
निजान्तरात्मा भवति स्वमित्रम् ॥ १४७ ॥

स्वोत्कर्षयोगेन यदीयचित्तं,
ध्यानं न यस्यास्ति परापकर्षे ॥
सदैव नैवास्ति यदीयवृत्ति,
स्तमन्तरात्मानमवेहि चित्ते ॥ १४८ ॥

सम्पूर्णसंसार मिमं नरा ये,
जानन्ति विष्ठागृहतुल्यमेव ॥
ते चान्तरात्माभिधमानवा हि,
लोकेषु तेषां सफलोऽवतारः ॥ १४९ ॥

भोगाँश्च ये रोगसमान्विदन्ति,
न संसृतौ सौख्यलवोऽपि तेषाम् ॥
जगत्परं स्वार्थपरं तथेमे,
माता पिता स्वसृगणाश्च सर्वे ॥ १५० ॥

उवास कारागृहतुल्यदेहे,
बद्ध स्तथायुष्यसुशृङ्खलाभिः ॥
जगत्सु किम्वारचयेन्मनुष्यः,
स्कन्धा इमे सन्ति तु पुद्गलानाम् ॥ १५१ ॥

निजात्मिकध्यानसुरक्तता च,
रत्नत्रयीध्यानमथो भवेच्च ॥
एकोऽस्म्यहं सर्वगुणैः प्रपूर्णो,
ज्ञानं तदेवं खलु सत्यमस्ति ॥ १५२ ॥

रत्नत्रयीस्वामिवरोऽहमस्मि,
सुखात्मकः शाश्वतचित्स्वरूपः ॥
कदाचिदन्यस्य भवामि नाहं,
महं परानन्दमय स्वरूपः ॥ १५३ ॥

क्रमेण सुखदुःखे च सातासाताख्यकर्मतः
चतुर्गतिभवे कूपे केवलं दुःख माप्यते ॥ १५४ ॥

कुप्यामि कं वा प्रति लोकमध्ये,
न दृश्यते क्रोधिजनोऽपि कश्चिद् ॥
रागं तथाऽहं प्रति कं करोमि,
न दृश्यते रागिजनोऽपि कश्चिद् ॥ १५५ ॥

द्वेषोभवेच्चेतसि ते यदा तु,
द्वेषी स्वयं तर्हि भव त्वमस्य ॥

द्वेषातिगं मानसमान्तरं चे
त्तद्वृत्तितो ज्ञायत आत्मतत्त्वम्    ॥ १५६ ॥

चेद्भासते संस्थिरमात्मचित्तं,
तद्भासते संस्थिरमेव सर्वम् ॥
मूर्छातिगान्मानसयोगतः स्या–
त्स्वयं स आत्मा परमोऽवधूतः    ॥ १५७ ॥

चित्तैर्भवस्य भ्रमणं चकास्ति,
चित्तैर्भवानां च भवेद्विनाशः
प्रवर्धते चंचलताऽपि चित्तै,
राशाऽपि सर्वस्य सुखस्य चित्तैः    ॥ १५८ ॥

मनः कपिर्मोहसुरां निपीय,
निरन्तरं कूर्दति धाम धाम्नः ॥
मनःकपि र्यो विषयातिगोऽयं,
प्रवर्ततेऽसौ स्थिरसौख्यधाम    ॥ १५९ ॥

कष्टक्रियां प्रकुर्वन्ति न कुर्वन्ति वशं मनः
निष्फलाऽस्ति क्रिया तस्य यथा चित्रं रजःस्थले ॥१६०॥

कम्पमाने सरोनीरे चन्द्रबिम्बश्च कम्पते ॥
स्थिरे सति सरोनीरे स्थिरो वशमना जनः ॥ १६१ ॥

पुरुषार्थं मुदा धृत्वा, कर्तारः स्ववशं मनः ॥
आत्मार्थिनो जनास्ते तु न दीना केश्च हेतुभिः ॥१६२॥

दुर्पंथं कुपथं धाव, द्विषमेव महन्मनः ॥
यावज्जितं मनो नैव, तावदस्ति तमः स्थिरम् ॥१६३॥

किं करोषि मनोलौल्यं, मनोलौल्यं निवारय ॥
कुरु मोक्षपुरश्चित्तं, गच्छ पारं भवाम्बुधेः ॥ १६४ ॥

भोगिविषयाभिच्छाया, यावदस्ति भवन्मनः
भवस्य भ्रमणं तावन्ना–त्र संशयवान्भव ॥ १६५ ॥

स्वध्यानेन जहि स्वान्तं, विषयेच्छां निवारय ॥
मानवानां नहि प्राप्योऽवतारो हि पुनःपुनः ॥ १६६ ॥

द्वेषिद्वेषं त्यजाशु त्वं, कस्य द्वेषं करोषि च ॥
द्वेषिणश्चात्र संसारे, भ्रमन्ति हि चतुर्गतौ ॥ १६७ ॥

द्वेषस्तव न धर्मोऽस्ति, परपरिणामतोऽस्त्ययम् ॥
व्यर्थं द्वेषं विधाय त्वं, भवे क्लेशं च लब्धवान् ॥१६८॥

सदा शुद्धस्वरूपस्त्वं, निर्मलः सिद्धसन्निभः ॥
मत्वा वस्तु परं स्वीयं, किं विस्मरसि चेतनम् ॥१६९॥

परपरिणामतो नित्यं, पृथक् चेतननायक ॥
विचारयन्निजं स्वेन, लभतेऽनुभवं स्वयम् ॥ १७० ॥

हास्यरोदौ न ते धर्मस्त्वमसि गमनातिगः ॥
शुल्कागारनिभो देहस्तत्र का ममता तव ॥ १७१ ॥

अमुश्चच्च बहून्देहान्, तथैवायं तनुः पुनः ॥
तस्मादातिपृथक् स्वात्मा, चिदानन्दो गुणालयः ॥१७२॥

जायते म्रियते नैव विद्धि त्वमविनाशिनम् ।
अजरोऽथामरः स्वाऽऽत्मा त्वं सुखायतनं महत् ।१७३।
अनन्तशक्तिसम्पन्नमनन्तर्द्धे श्च कारणम् ।
निश्चलं ध्यायमानानां,–क्लेशो नश्येदनादिजः ॥१७४॥
न त्वं दुःखी न दुर्भागी स्वान्तर्दृष्टिं प्रधारय ।
अमूल्यायुः स्वयं प्राप्य प्रीतिं च स्वगुणे कुरु ॥१७५॥
स्वर्णं नासि नवा रौप्यं पुद्गलस्कन्ध एव सः ।
तत्र त्वं लोभको भूत्वा मूढ किं नाम वञ्चयसे ॥१७६॥
नासि नारी न पुत्रादि स्त्वत्तो भिन्न मिदं जगत् ।
सदा भिन्नोऽसि सर्वस्मात्स्वं दीनं मन्यसे कथम् ॥१७७॥
पामाघर्षणवृद्ध्यर्थं सुखं दुःखमयं हि तत् ।
विषयवासनासौख्यं भवकूपोऽस्ति केवलम् ॥१७८॥
स एव भवमूलं य श्चेतनः परसम्मुखः ।
आत्मावस्थानुकूलःस चेतनः यः स्वसम्मुखः ॥१७९॥
परभावे यदारक्त स्तदा कर्म समश्नुषे ।
विहरन्स्वस्वरूपे च त्वं प्राप्नोषि सदा सुखम् ॥१८०॥
अन्तर्दृष्टि हिं धर्मोऽस्ति कर्माणि बाह्यदृष्टितः ।
रहस्यं तस्य संचिन्त्य चित्ते चिन्तय सज्जन !! ॥१८१॥
अन्तर्दृष्टिमनुष्याणां,–चित्तेष्वानन्द उद्भवेत् ।
जगत्पाशसमं तेषां केवलं दुःखकारणम् ॥ १८२ ॥

सम्राड् राजा च रंकश्च सर्वं नाट्य मिदं जगत् ।
नात्र ते ममतांशोऽपि पुद्गलममतां त्यज ॥ १८३ ॥

सर्वस्मात्त्वं महाश्रेष्ठ स्तव दास इदं जगत् ।
आशादासीवशे कृत्वा ध्याने वासं सदा कुरु ॥१८४॥

धर्माधर्मवियत्काल,–पुद्गलान्चिन्तयाधुना ।
तेभ्यस्त्वं सर्वदा भिन्नः कालेनाऽनादिना तथा ॥१८५॥

भूत्वाऽन्यपरिणामी त्वं पुद्गलेऽनादिकालतः ।
कृत्वाऽज्ञानं च मिथ्या त्वं शक्तिमेव व्यनाशयः ॥१८६॥

पुद्गलो न हि ते मित्रं तस्य संगे न ते सुखम् ।
एकत्वेन सुखं तेऽस्ति दुःखं तु मोहभावतः ॥१८७॥

मोहेनाहो निजात्माऽयं बद्धो भवति पुद्गलैः ।
दुःखोपायं तु वेत्त्यात्मा विदन्ति नच पुद्गलाः ॥१८८॥

स्वस्मिन्मिलन्ति दुग्धाम्बु–वत्सातासातपुद्गलाः ।
आत्मा परग्रही भूत्वा सुखंदुःखं समश्नुते ॥ १८९ ॥

बाह्यस्य परिणामेन भवेद्बन्धो निजात्मनः ।
बाह्यदृष्टि र्भवन्नात्मा स्वयमन्धः प्रजायते ॥ १९० ॥

अन्तर्दृष्टिं च कुर्वाण आत्माऽऽत्मानमवेक्षते ।
बद्धो भवति नात्माऽयमानन्दः स्वस्वभावतः ॥१९१॥

आत्माऽसंख्यप्रदेशेन, स्वयमेव प्रकाशते ।
द्वयोपयोगतश्चात्मा, शुद्धसिद्धश्च शाश्वतः ॥१९२॥

आत्मशुद्धस्वरूपो हि स्थिरदृष्ट्या च धार्यताम् ।
ज्ञानेन भासते स्वात्मा लोकालोकप्रकाशकः ॥१९३॥

केवलशुद्धरूपे तु अखण्डानन्द उद्भवेत् ।
लोकाचारे परं दृष्टो भवदुःखमहोदधिः ॥१९४।

रत्नचिन्तामणिं त्यक्त्वा काचमिच्छेच्च को जनः।
आत्मन् !! क्षणिकसौख्यार्थं सत्यं त्यजति किं भवान्१९५

शाश्वतः सत्य आत्माऽयं सुखानां धाम शाश्वतम् ।
नान्यत्र कुत्रचित्सौख्यं किं विस्मरसि चेतन !।१९६।

विक्षिप्तो ज्ञानशून्यो य स्तस्य चान्तस्तमो महत् ।
बाह्यसौख्यस्य लाभार्थं स्थानात्स्थानं च गच्छति।१९७॥

स्वप्नमोदकभोगेन बुभुक्षा नैव शाम्यति ।
परपुद्गलसौख्यं यद् दुःखसम्बन्ध एव तत् ॥१९८॥

जानीहि त्वं स्वयं स्वात्मन्नपारं पारवान् यतः ।
निर्मलः केवलज्ञानस्वरूपः स्वगुणाकरः ॥ १९९ ॥

निर्मलं भवतो ज्योति र्निरञ्जनमतीन्द्रियम्
शुद्धा निरुपमा सत्ता निश्चयनयत स्तव ॥२००॥

मूढा बाह्यं हि पश्यन्ति स्वान्तः पश्यन्ति योगिनः
आत्मा स्वपरविद्योती स्वान्तर्गुह्यमिदं वचः ॥२०१॥

कां वार्तां ते करिष्येऽहं सर्ववाचामगोचरः ;
स्याद्वादसत्तया पूर्णश्चिदानन्दस्वरूपवान् ॥२०२॥

अस्तिनास्तिस्वरूपाणां,–स्थानं त्वमसि शाश्वतम् ।
त्वां विनाऽन्योऽस्ति को देवो भगवाँश्च प्रभुर्विभुः ।२०३॥

द्रष्टा शाश्वतलोकाना मलोकानां भवान्स्वयम् ।
लिंगं जाति र्न ते योनि र्नाम वेषोऽपि ते नहि ॥२०४॥

स्थित्युत्पादव्ययात्मा च गुणपर्यायधारकः ।
ज्ञानामृतस्वरूपस्त्वं व्राह्याचारो न ते मतः ॥२०५॥

मनश्चांचल्यमुत्सृज्य स्वमात्मन्येव मार्गय ।
चिदानन्दचरित्रस्य जायन्तेऽन्तर्महामुदः ॥२०६॥

तवाऽसंख्यप्रदेशेषु निश्चलाऽस्त्यवगाहना ।
अन्तर्दृश्यस्वरूपस्त्वं पृथक् नैव कदाचन ॥२०७॥

परमात्मा स एवाऽहं सिद्धो बुद्ध श्च शाश्वतः ।
सोऽहं सोऽहमिति ज्ञानं सम्बन्धः सत्य एव सः ॥२०८॥

त्वं सदैव समृद्धीनां भोगी क्षायिकभावतः
ध्यायेत शुद्धरूपं चेत् तदा सर्वं प्रकाशते ॥२०९॥

किं ते कथनमात्रेण स्वोपयोगं स्वयं कुरु ।
आत्मा निजोपयोगी यः सोऽनन्तसुखभोगवान् ॥२१०।

तास्तु पुद्गलरूपा याः स्युः कर्माष्टकवर्गणाः
पुद्गलेभ्योऽसि भिन्नस्त्वं मोक्षरूपश्च चिन्मयः ॥२११॥

उच्छिष्टं पुद्गलं लब्ध्वा भोगं तेन करोषि किम् ।
भिन्नद्रव्येण को मेलो ज्ञात्वा तं पुद्गलं त्यज ॥२१२॥

ज्ञायते तर्हि सत्तावान्सर्वतो निर्भयो भुवि ।
दृढनिश्चयतो ज्ञाने स्वाज्ञायां भुवनत्रयम् ॥२१३॥
दीपकं कः करे कृत्वा स्वमन्यत्र च मार्गयेत् ।
अन्तर्ज्ञानप्रकाशेन परस्मिन्किं निजो भवेत् ॥२१४॥
सिंहबालोऽजवृन्देषु बाल्यवासं विधाय च ।
स्वस्मिन्नजधियं धृत्वा वर्तते सोऽपि तैः सह ॥२१५॥
दृष्टेकेसरिसिंहे तु स्वस्वरूपस्मृति र्यथा ।
परमात्मपदे ध्याते परमात्मा तथा भवेत् । ॥२१६॥
उपकर्त्तोपयोगी च धीरः साहसिको दृढः ।
गुरौ श्रद्धाकरो भक्तो न्यायी शूरो विवेकवान् ॥२१७॥
स्वेच्छया न चलेद्य श्च भयलज्जाविवर्जकः
एवं शिष्या विधास्यन्ति रागं स्वात्मपदे ध्रुवम् ॥२१८॥
द्व्यर्थका जगतो वाचस्तत्र ध्यानं न दीयताम् ।
श्रवणं तद्विचारश्च स्वभानं नैव विस्मरेत् ॥२१९॥
जिज्ञासवः स्वतत्त्वानां,–शिष्याः प्रेमविधायकाः ।
अन्तस्तत्त्वे मनः कृत्वा लप्स्यन्ते क्षेममुत्तमम् ॥२२०॥
अन्तस्तत्त्वे यतश्चित्तं दशा शुद्धा प्रकाशते ।
यत्र शुद्धरुचि स्तत्र को भीरुश्च भवे भ्रमेत् ॥२२१॥
भीरुः कायरतां धत्ते त्यजत्यान्तरनिश्चितम् ।
ग्राहग्रहणवद्वृत्तिं धत्ते यः स्वपदे क्षमः ॥२२२॥

धारयन्सद्गुरोराज्ञां वैयावृत्येऽनुरागवान् ।
क्षुद्रा वृत्ति र्न यस्याऽस्ति स्वान्तर्ज्ञानं करोति च ॥२२३॥

न स्वसंकल्पमोक्तारः गुरुभक्ता दयाप्रियाः ।
तथा शिष्यास्तु संसारे भवन्ति मोक्षगामिनः ॥२२४॥

आत्मनो योग्यतां यान्ति सज्जनाः शिष्यसाधवः ।
अन्तरात्मानमाज्ञाय भवन्ति जगदीश्वराः ॥ २२५ ॥

जगन्नाथो निजात्माऽस्ति संसारे तीर्थ मुत्तमम् ।
विना सत्तीर्थविज्ञानं सारं न कोऽपि शोधयेत् ॥२२६॥

येन सर्वे हि शोध्यन्ते वर्त्तसे स त्व मात्मराट् ।
अनन्तर्द्धिनिधिस्वामी स्वपदं स्वेन गीयते ॥२२७॥

यत्पारगमनं तीर्त्वा प्रतीपसरणीं नदीम् ।
परमात्मपदप्राप्ति स्तस्मादपि सुदुष्करा ॥ २२८ ॥

अब्धिशोषं करिष्याम उद्यतन्ते च टिट्टिभाः ।
ध्रुवं स्याच्छृदि सन्तोषः साहसेन तथाऽऽत्मनि ॥२२९॥

धर्मध्यानावलम्बेन शुद्धभावः प्रवर्तते ।
शुक्लध्यानान्शमाप्नोति स्वगुणानपि मानवः ॥ २३० ॥

शुक्लध्यानं प्रकुर्वाणः कुर्वन्कर्मविनाशनम् ।
केवलज्ञानसद्भासा लोकालोकः प्रकाशते ॥ २३१ ॥

चत्वारि घातिकर्माणि पृथक् कृत्वा स्वयं स्वतः ।
वेदनीयादिकर्माणि दग्धरज्जुवदासते ॥ २३२ ॥

आयुष्कर्मोदयेनैव विहरेत्स महीतले ।
सर्वकर्मविनाशेन लभ्यं शिवपुरं पुनः ॥ २३३ ॥

न जन्ममरणो यत्र न शोकविरहौ यतः ।
क्षुत्पिपासे न यत्र स्त श्चिन्ता रोगो नवा यतः ॥२३४॥

पंचदेहाच्च यो भिन्नो यानायानविवर्जितः ।
रूपारूपस्वरूपी च यत्र तृष्णा नवा मनः॥ २३५ ॥

यत्राष्टवर्गणा नैव लिङ्गं वेदो न जातयः ।
छेदो खेदो नवा यत्र प्राणाः पञ्चेन्द्रियाणि च ॥२३६॥

अतिदूरं यतः स्थानात्सातासाते च जग्मतुः
सहजानन्दरूपे तु सुखं पूर्णं प्रवर्त्तते ॥ २३७ ॥

परमेशः सदानन्दः परात्मा पुरुषोत्तमः ।
दुःखातीतस्वरूपो हि नहि शब्दादयः पुनः ॥२३८॥

रागद्वेषौ न यत्र स्त आत्मज्योतिश्च निर्मलम् ।
शुद्धो भूत्वा स्वसत्ताभि र्महोद्योतं चकार सः ॥२३९॥

लोकत्रये दिनाधीशो यश्च स्वान्यप्रकाशकः ।
वाचामगोचरो धर्म,—रूपः क्षायिकवान्प्रभुः ॥२४०॥

चेतने शुद्धरूपे हि अस्ति भेदद्वयं ततः ।
अस्तिनास्तिमयाः सन्ति अनन्ता धर्मराशयः ॥२४१॥

नित्यानित्यस्वभावो य आत्मरूपमयोऽचलः ।
भव्याभव्यस्वभावात्मा शुद्धोऽनन्तप्रभाववान् ॥२४२॥

अखण्डश्चाव्ययश्चाजो निःसंगश्च निराकृतिः ।
यद्गुणा नित्यपर्याया अगुरुलघुमान्स्वयम् ॥२४३॥
अक्षरोऽविचलो धर्ममयो वाण्या अगोचरः ।
केवली यन्न शक्नोति वक्तुं ज्ञातुमपि स्वयम् ॥२४४॥
निवृत्तिमत्समस्त्येत दुःखं किञ्चिन्न वा यतः ।
सनातनं शिवं लब्ध्वा अपारं लभतां सुखम् ॥२४५॥
तिरोभावगुणानां च आविर्भावो यदा भवेत् ।
तदा त्वं परमात्माऽसि तत्त्वमस्यादिबोधितः ॥ २४६ ॥
अहं त्वं भेदभावो न स्वात्मद्रव्यं तु निर्मलम् ।
अनन्तगुणतोऽनेक एकोऽसंख्यप्रदेशतः ॥ २४७ ॥
मुक्तौ जीवा अनन्तास्तु भवन्ति सदृशा गुणैः ।
व्यक्तिरूपेण भिन्नास्ते कैश्चित्कोऽपि न पीड्यते ॥२४८॥
साद्यनन्तस्थितिस्तत्र मुक्तिस्थानं च निर्मलम् ।
नास्ति स्वस्वामिभावोऽपि सत्तावन्तः समा स्तथा २४९
शुद्धरूपमगाधं यत्तल्लेशानुभवं हृदि ।
प्राप्यैतत्पदमाख्यातं देशो यस्यास्ति चोत्तमः ॥२५०॥
त्रयोदशगुणस्थानं लब्ध्वा स्वात्मा प्रकाशते ।
अनन्तगुणसर्वज्ञो न विनाशी स वर्तते ॥ २५१ ॥
जिनेश्वरर्षभो देवः शोभते माणसापुरे ।
पार्श्वप्रभोः सहायेन ग्रन्थ एवं मया कृतः ॥२५२॥

जिनाज्ञातो विरुद्धं यन्मतिभ्रान्त्याच दूषणम् ।
भासते योग्यबुद्ध्या तच्छोधनीयं च सज्जनैः ॥२५३॥
चन्द्रर्तुनिधिचन्द्रांके १६६१ मिते वैक्रमवत्सरे ।
माघशुक्लदशम्यां तु ग्रन्थः पूर्तिमगादयम् ॥२५४॥
नान्यथा तत्स्वरूपं हि सिद्धरूपं सनातनम्।
बुद्धिसागर आप्नोति चित्स्वरूपं सुमङ्गलम् ।॥२५५॥
पद्मावती पार्श्वयक्षो धरणेन्द्रो गुणालयः ।
शंखेशपार्श्वनाथो वः कुर्वन्तु मङ्गलं सदा ॥२५६॥

इति श्री आत्मस्वरूपग्रन्थः



जैनाचार्य बुद्धिसागरसूरिकृत—

# परमात्मदर्शनम् ।

कल्पद्रु र्जङ्गम स्तीर्थ सत्यदेवोऽस्ति सद्गुरुः ।
सेवे भावेन तं वाचा कायेन मनसा तथा ॥ १ ॥

वेत्त्यात्मानं निजात्मैव, ज्ञायकः कोऽपि नाऽपरः ।
ज्ञाता स एक आत्मैव नित्यत्वेन प्रवर्तते ॥ २ ॥

स्वयमात्मनि मासि त्वं त्वदीयं त्वयि वर्तते—
किं विधत्से ममेति त्वं पराशां हृदि धारयन् ॥ ३ ॥

विलोक्यात्मस्वरूपं हि ज्ञातं पुद्गलखेलनम् ।
आत्मा पृथक् च तेभ्योऽस्ति चिदानन्दो गुणाकरः ॥ ४ ॥

ध्यानेन यत्र पश्यामि स्थिरं सर्वं स्वरूपतः ।
स्वप्नोऽभून्मित्रशत्रू च गताऽनादिकुपीडना ॥ ५ ॥

परत्राऽहं धियं कृत्वा बद्धो जातः परत्र हि ।
आत्मन्यहंमति श्चेत्स्या-त्तत्क लिप्तो भवाम्यहम् ॥ ६ ॥

आत्मा जडैः सहाऽनादि-कालात्परिणतिं गतः ।
अशुद्धः परिणम्याऽसौ नाट्यरंगं करोति च ॥ ७ ॥

स्वस्याऽज्ञानेन दुखानि, विविधानि स लब्धवान् ।
स्वपदज्ञानतः पश्चात् सिद्धो हि भगवानभूत् ॥ ८ ॥

मया यस्माद्गुरो र्ज्ञातो निज आत्मा सुखप्रदः ।
भावेन वाङ्मनःकायै र्नौमि गुरोः पदोर्युगम् ॥ ९ ॥

न कोऽपि भवदुःखानां हर्ताऽस्ति सद्गुरुं विना ।
वन्दे तं सद्गुरुं नित्यं साफल्यं जन्मनो भवेत् ॥ १० ॥

साध्यसाधनसापेक्ष आचारं यश्च पालयेत् ।
जयन्रागमदक्रोधांस्तज्जन्म सफलं भवेत् ॥ ११ ॥

त्यक्त्वा रागादिकं शान्त्या स्वात्मध्यानं करिष्यति।
सम्यग् ज्ञानक्रियाभ्यां स भगवान् हि भविष्यति ॥ १२ ॥

वक्ति कश्चिद् क्रियावादी तर्तोऽस्मि भवसागरम्।
क्रियया कर्मनाशोऽस्ति ह्याचारः सफलो मम ॥ १३ ॥

बाह्यक्रियासु संलिप्तो नान्त स्तत्त्वस्य वेदकः।
पर्यटन् स भवे भ्रान्तो निर्ज्ञानोऽसौ क्रियाजडी ॥ १४ ॥

ज्ञानं हि मन्यते कोऽपि ज्ञानं सत्यं जगन्महत्।
मुक्तिः कुत्र विना ज्ञानं ज्ञानेन भवपारगः ॥ १५ ॥

गृह्णात्येकान्ततश्चैवं यश्च चित्ते कदाग्रही।
विनात्मतत्त्वबोधेन, तत्त्वज्ञानं न जायते ॥ १६ ॥

युवत्यंगेक्षणेनैव न तृप्ति विषयस्य च।
भोजनज्ञानतो भ्रात ने बुभुक्षा प्रशाम्यति ॥ १७ ॥

वाक्पटुत्वेषु विद्वत्ता लोकरञ्जनहेतवे।
वाचयन् पुस्तकं ग्रन्थं किं धत्ते शाश्वतं पदम् ॥ १८ ॥

परत्राऽहंमतिर्याव दभिमानेन वर्तते।
तावज्ज्ञानी न कोऽप्यस्ति न शिवस्थानमश्नुते ॥ १९ ॥

वैराग्यादिगुणव्रातो यदाऽऽत्मनि प्रकाशते-
समभावै निरीक्षेत परमात्मपदं विशेत् ॥ २० ॥

विना त्यागं च वैराग्य-मात्मज्ञानं न जायते।
लभते न शिवं धाम-कदापि ज्ञानमन्तरा ॥ २१ ॥

तदाद्रियेत यद्युक्तं कदाग्रहनिवारणम्।
वैराग्येषु मनः स्थाप्यं, रागश्च परमात्मनि ॥ २२ ॥

सम्यक्त्वमर्पितं येन गुरुदेवो महानसौ-
आत्मज्ञानं विना लभ्यं शिवधाम कदापि न ॥ २३ ॥

सेवेऽहं तं गुरुं यश्च निमित्तो गुरुरात्मनः ।
यत्र तत्र गुरो बुद्ध्या भ्राम्यति गवयोपमः ॥ २४ ॥

किं वस्तु गुरुरस्तीति नान्विष्यन्ति हि वस्तु तद् ।
पयो यावत्सितं वस्तु, गुरुबुद्धिश्च तादृशी ॥ २५ ॥

सर्वत्र गुरुबुद्धि श्चे-दात्मशुद्धि र्न जायते ।
सेवते सद्गुरुं प्रेम्णा, तत्पादकमलाश्रितः ॥ २६ ॥

लभते परमार्थ स भवेच्छिवसुखालयः ।
उपकर्ता भवे नास्ति कोऽपि सद्गुरुसन्निभः ॥ २७ ॥

सद्गुरुः कामकुम्भोऽस्ति भवसागरतारकः ।
उपकर्ता गुरुः साक्षात्परोक्षस्तु जिनः प्रभुः ॥ २८ ॥

एवं बुद्धौ तु भूतायां जायते धर्मयोग्यता ।
धार्यते तूपदेशो न श्रद्धां भक्तिं विना गुरोः ॥ २९ ॥

पठनं श्रवणं चापि शास्त्रस्य क्लेशकारणम् ।
लभ्यते तत्त्वरूपं न गुरुवाक्यामृतं विना ॥ ३० ॥

सद्गुरौ सेव्यमाने तु सम्यक् ज्ञानमवाप्यते ।
गुरुस्तारकबुद्ध्यैव सूपदेशं ददाति चः ॥ ३१ ॥

श्रुत्वा तं श्रद्धया भक्त्या आद्रियस्व विशेषतः ।
तस्य सूक्तोपदेशं च सदा चिन्तय चेतसि ॥ ३२ ॥

त्यक्त्वा ज्ञानेन यत्त्याज्यं स्वोपादेय मुपैति च ।
विनाशयन्कृतं कर्म गृह्णाति शाश्वतं पदम् ॥ ३३ ॥

द्रव्यभावाख्यकर्माणि परिहृत्य समन्ततः ।
क्रीडंश्च समतासंगे गच्छ पारं भवाम्बुधेः ॥ ३४ ॥

करोति कर्मनाशं च धन्वन्तरिसमो गुरुः ।
तस्योपमा सुवैद्यैश्च भव तत्पदकिंकरः ॥ ३५ ॥

स्वच्छन्दचारितां त्यक्त्वा आभिसेवस्व सद्गुरुम् ।
गुर्वाधीनंमनःकृत्वा लभस्व शाश्वतं पदम् ॥ ३६ ॥

नहि मूलमृते वृत्तो न ज्ञानं गुरुमन्तरा ।
वाचय ग्रन्थपत्राणि किन्त्वज्ञानं न नश्यति ॥ ३७ ॥

मानेन पठनं ज्ञानं लोकरंजनहेतवे ।
विनाऽऽत्मलत्त्यिकध्यानं मुक्तिराज्यं न लभ्यते ॥ ३८ ।

कृत्वा छलैः क्रियाकाण्डं करोति लोकरंजनम् ।
तच्छुष्कं ज्ञानमप्येकं निरर्थं वित्त भो जनाः ॥ ३६ ॥

लाभेऽलाभे सुखे दुःखे समता शत्रुमित्रयोः ।
औदासिन्यं स्वचित्तेषु नौरास्ति स भवाम्बुधेः ॥ ४० ॥

निन्दका अतिनिन्दन्तु पूजकाः पूजयन्तु च ।
वच्यन्त्याटोपिनं धूर्त्ताः सर्वान्पश्य च साम्यतः ॥ ४१ ॥

अन्तःसृष्टि गुणानां च निःसमाऽऽत्मनि वर्तते ।
वितण्डां वादिनां श्रुत्वा मौनिनः सम्भवन्ति ते ॥ ४२ ॥

धर्माणामुपदेशस्तु यत्राऽस्ति नटसान्निभः ।
अन्तर्दृष्टि र्न यत्रास्ति मिथ्यावेषोऽस्ति तस्य तु ॥ ४३ ॥

दुर्गम्ये कालिकालेऽस्मिन्दृश्यते विरलो गुरुः ।
अन्ये तु सर्ववल्मीकात्सर्पराशिरिव स्मृताः ॥ ४४ ॥

द्वेषं गच्छममत्वं च धृत्वा चित्ते कदाग्रहम् ।
मतमतान्तरे प्राप्तः दुर्गतिप्रमदासुहृत् ॥ ४५ ॥

गतागतेऽब्धिपूराणां व्यग्रा मत्स्या भवन्ति हि ।
प्राणनाशस्तटागत्या न्यायो गच्छस्य चेदृशः ॥ ४६ ॥

शरीरे न ममत्वं चेत्—तद्देहात्किं च बंधनम् ।
व्यवहारेण गच्छस्थः स्वान्तर्गुणगणालयः ॥ ४७ ।.

मनस्यन्यत्तथा वाह्ये ततोऽन्यद्यस्य वर्तते ।
न समः कथने वृत्तौ स चतुष्पथतस्करः ॥ ४८ ॥

उद्घाटयति यः सम्यग् ज्ञात्वा धर्मस्य पेटिकाम् ।
सेवस्व सत्यचित्तेन महाकारुणिकं गुरुम् ॥ ४६ ॥

वने वने न मातंगा देवो नास्ति युगे युगे ।
प्रतिमुण्डं गुरुत्वं न ज्ञात्वा सेवस्व सद्गुरुम् ॥ ५० ॥

विषयभैक्ष्यभोगी न, ब्रह्मचारी गुणालयः ।
छलवृत्तिपरित्यागी यस्तं वन्दे महागुरुम् ॥ ५१ ॥

धर्मरत्नं मुदा यस्माल्लब्धं कारुणिकाद्गुरोः ।
सदैव शरणं तस्य व्यर्थं नान्यच्च चिन्तय ॥ ५२ ॥

गुरवो वन्दिता भ्रान्त्वा शतधा चाहतं शिरः ।
यत्र तत्र नतं मुर्ध्ना किंचित्सारं न लब्धवान् ॥ ५३ ॥

भ्रान्त्वाऽनेकभवाने–वमपारं दुखमाप्तवान् ।
सद्गुरुर्निःश्रमं लब्ध, स्तन्मां तारय तारय ॥ ५४ ॥

विनेयश्च महान् भक्तः, श्रद्धायां यन्मनःस्थिरम् ।
साहसी शिवधामार्थी गम्भीरो निजचेतसि ॥ ५५ ॥

वैराग्येषु मनोलग्नं वारिता विषयस्पृहा ।
धैर्यं मेरुसमं यस्य वशे कायो वचः मनः ॥ ५६ ॥

स्वीकृत्य समतां चित्ते येनेर्ष्या च विनाशिता ।
कुर्वतः सद्गुरो र्भक्तिं लभन्ते शिवसम्पदम् ॥ ५७ ॥

गच्छन् गुरुनिदेशेन नाज्ञालोपं करोति यः ।
शिक्षयन्तं गुरुं स्वीयं कदापि नहि कुप्यति ॥ ५८ ॥

गुरुसेवारतश्चाऽपि प्रकाशयति तद्गुणान् ।
नेक्षते गुरु वैगुण्यं गुरुभक्तः स निश्चितः ॥ ५६ ॥

निन्देदवगुणं स्वीयं प्रणमान्विधिना गुरुम् ।
क्षणे क्षणे गुरुं पश्यन्नानन्दं हृदि धारयेत् ॥ ६० ॥

विनेयाधिकृतिः प्रोक्ताऽनुभवपंचविंशतौ ।
तद्रीत्या ये चलिष्यान्ति, तरिष्यन्ति भवाम्बुधिम् ॥ ६१ ॥

रमणीयां स्त्रियं दृष्ट्वा प्रेमिचित्ते यथा रतिः ।
शिष्याणां च तथा रागः सद्गुरूणां ततोऽधिकः ॥ ६२ ॥

यस्य चित्ते नहि ज्ञानं गुरोः सम्यक्त्वदायिनः ।
परोपकारिणीं बुद्धिं,-विना भ्राम्यति सोऽबुधः ॥ ६३ ॥

दीक्षागुरौ तथा भेदो गुरौ सम्यक्त्वदायके ।
रविखद्योतवद्भेदः सुशिष्या हृदि जानत ॥ ६४ ॥

दृश्यो धर्मगुरु र्यः स दीक्षादायी महामुनिः ।
वेत्स्यन्ति ज्ञानिनोऽवश्यं संशयं न मनाक् कुरु ॥ ६५ ॥

गुरुमेवं हि सेवस्व भव सद्गुणधाम च ।
लभन्ते गुणिनः शिष्या स्वविश्रामं शिवे पुरे ॥ ६६ ॥

सूर्योदयाः सहस्रं स्युः द्योततां शतधा शशी ।
दीपकाश्चेत्सहस्रं स्युः किञ्चिन्नान्धो निरीक्षते ॥ ६७ ॥

प्राप्येत सद्गुरु ज्ञानी यदि चोपदिशेदति ।
मूढास्तन्न हि जानन्ति—एवं क्लेशविधायकाः ॥ ६८ ॥

जडो भूत्वा जडत्वेन गुरौ कुगुरुबुद्धिमान् ।
खरपुच्छग्रही वाऽसौ स्वात्मशुद्धिं करोति न ॥ ६९ ॥

विश्वासी सद्गुरो नैव विश्वासः कुगुरो स्तथा ।
अज्ञानी पशुरात्माऽयं सर्वदुःखस्य धामः सः ॥ ७० ॥

तर्कशक्तिः परा यस्य गम्भीरवचनश्च यः ।
चित्ते यस्याऽस्ति मोक्षाशा धीरो यो धर्मकर्मणि ॥ ७१ ॥

लप्स्यन्त ईदृशाःशिष्या अनेकान्तपथं शुभम् ।
अभ्यस्य गुरुतो ग्रन्थान् भविष्यन्ति महाव्रताः ॥ ७२ ॥

निर्ग्रन्थश्च महान् भूत्वा पंचाचारं च पालयेत् ।
व्यवहारं धरेच्छुद्धं रत्नपंचमहाव्रतम् ॥ ७३ ॥

निश्चयात्मस्वरूपेषु रममाणो दिवानिशम् ।
गुणपर्यायमीमांसा,—विधौ लीनः सदा भवेत् ॥ ७४ ॥

षड्द्रव्यनवतत्त्वाना मुपयोगोऽस्ति बोधतः ।
आत्माऽनेकगुणर्द्धीनां नित्यभोगविधायकः ॥ ७५ ॥

न भोगी परभावानां ध्यानवानात्मरूपतः ।
न ध्यानं परभावानां स्वं चरित्रं स पश्यति ॥ ७६ ॥

अखण्डमक्षयं नित्यमात्मरूपं विलोक्य सः ।
चमत्कृतो निजात्माऽय,—मरेऽहं तु महानृपः ॥ ७७ ॥

परदेशेषु बभ्राम लब्ध्वा दुःखानि भूरिशः ।
निजदेशं शुभ दृष्ट्वा शान्तोऽभुवं शिवार्थिकः ॥ ७८ ॥

परपुद्गलदेशं तु निजदेशं विवेद च ।
तन्ममत्वं मुधा कृत्वा दधौ वेषं तु पौद्गलम् ॥ ७९ ॥

स्थाने स्थाने हि बभ्राम दुःखाकरचतुर्गतौ ।
तत्राऽपि ममदेशोति गुणहान मकारयम् ॥ ८० ॥

हानि र्न स्यात्प्रदेशात्तु धर्माधर्मविहायसाम् ।
पुद्गलानां च यो देशो दत्ते दुःखानि मोहिने ॥ ८१ ॥

पंचवर्णा यतः सन्ति द्वौ गन्धौ भवतो यतः ।
यत्र पंचरसाः सन्ति स्पर्शा अष्टौ वसन्ति च ॥ ८२ ॥

पर्याया ईदृशा यत्र तद्द्रव्यं पुद्गलाभिधम् ।
लोकालोकेषु तद्व्याप्तं तदनादिः प्रवर्तते ॥ ८३ ॥

अस्थादनादिकालेन स्थास्यत्यनन्तकालतः ।
नित्यानित्यत्वतो रूपि-द्रव्यं निर्णीयते सदा ॥ ८४ ॥

ये घटाद्या निरीक्ष्यन्ते तान्सर्वान्विद्धि पुद्गलान् ।
ते भिन्ना आत्मतः सन्ति शास्त्रवाक्यैः प्रमाणय ॥ ८५ ॥

विशन्पुद्गलदेशेषु चेतनः कर्मवेष्ठितः ।
स्वीकुर्वन्तन्ममत्वं तु—मारं मारं स दैन्यवान् ॥ ८६ ॥

कृतेषु कोट्युपायेषु पृथ्वी कस्याऽपि नाऽभवत् ।
लक्षोपायविधानेऽपि नभः कैश्चिन्न गृह्यते ॥ ८७ ॥

कृत्रिमं पौद्गलं वस्तु गृहदुर्गपणादिकम् ।
स्वर्णं रौप्यं धनं सर्वं पुद्गलक्रीडनं खलु ॥ ८८ ॥

पुद्गलानां सदा द्रष्टा ज्ञाता च सुखदुःखयोः ।
पुद्गलेष्ववसत्सोऽय मात्मा सर्वगुणालयः ॥ ८९ ॥

पुद्गला ये निरीक्ष्यन्ते तेभ्यो भिन्नोऽस्ति चेतनः ।
चेतनः कर्मणां कर्ता, यदाऽन्यपरिणामवान् ॥ ९० ॥

आत्माऽसंख्यप्रदेशोऽस्ति तस्य प्रतिप्रदेशकम् ।
ज्ञानानन्त्यं जिना ऊचुः सत्पर्यायं विजानत ॥ ९१ ॥

द्वौ भेदावुपयोगस्य सामान्येन विशेषतः ।
असंख्यातप्रदेशेभ्यो भोक्ताऽस्ति स्वगुणस्य च ॥ ९२ ॥

अनन्ताऽस्तित्वधर्माणां भोक्ताऽस्ति स्वात्मराडयम् ।
अनन्ता नास्तिधर्माश्च प्रतिक्षणं भवन्ति ते ॥ ९३ ॥

शुद्धआत्मप्रदेशोऽस्ति समतारसवारिधिः ।
आत्मा स्वगुणकर्ताऽस्ति स्वस्मिन्शुद्धनयेन च ॥ ९४ ॥

तत्प्रदेशेषु वासेन साम्यसंगे विहारतः ।
उच्छलन्ति सदानन्द-वीचयः सुखसागरे ॥ ९५ ॥

परदेशममत्वे हि नष्टे ज्योतिः प्रकाशते ।
स्वत आत्मस्वरूपस्य महोद्योतः प्रकाशते ॥ ९६ ॥

पुद्गलानां पृथक् जाति र्मम जाति स्ततः पृथक् ।
भिन्नजात्या च कः संग स्ततः खिन्नो भवाम्यहम् ॥ ९७ ॥

अनादिकालतः संग स्तत्र मैत्रममन्यत ।
रागद्वेषस्य योगेन विचित्र देहमासदत् ॥ ९८ ॥

आत्मपुद्गलसंगस्तु दुग्धसलिलसंगवत् ।
अनादिकालतो जातः कुर्वन्कर्म च कुत्सितम् ॥ ९९ ॥

अशुद्धपरिणामेन कर्ता कर्म च कथ्यते ।
शुद्धपरिणते योगै-रात्मा शुद्धो निरंजनः ॥ १०० ॥

पुद्गलस्याशनाधाने वासो गेहश्च पुद्गले ।
तत्र वासं मुधा कृत्वा सुखबुद्धिं विवेद च ॥ १०१ ॥

इदानीं किं रमे मोहे यस्य क्रूरगतिः किल ।
तन्मध्ये संगतो नूनं व्याकुलोऽहमहोऽभवम् ॥ १०२ ॥

स मोहो नास्ति मे मित्रं तत्स्वभावो न शोभनः
हाहा तेषां हि संगेन ह्येवं जाता मम स्थितिः ॥ १०३ ॥

चतुरशीतिलक्षाङ्क,-हट्टागतिचतुष्पथे ।
बहुधोत्पद्य मृत्वा च ह्यपारदुःख मासवान् ॥ १०४ ॥

रागः पुद्गलसंगेऽस्ति रोगः पुद्गलसंगमे ।
पुद्गलमोहतः शोकः पुद्गलेष्वरुची रुचिः ॥ १०५ ॥

गृहपुद्गललोभेन युद्ध्यन्ति मनुजाः स्वयम् ।
राजानः सज्जनाः श्रेष्ठा व्यर्थं जन्म धरन्ति ते ॥ १०६ ॥

स्वगुणानां भवेद्धानि-र्मोहमैत्र्यात्सुनिश्चिता ।
मूढाऽऽत्मानोऽशुभज्ञाना-स्तेऽरण्यगवयैः समाः ॥ १०७ ॥

गृहीत्वा पुद्गलाऽऽस्वादं रममाणश्च तैः सह ।
विष्ठाकीट इवाऽसौ तु पापं कर्म दधाति च ॥ १०८ ॥

व्यस्मरच्च स्वयं भ्रान्त्वा रूपं निश्चलमात्मनः ।
अशुद्धपरिणामेन भवकूपेऽहमापतम् ॥ १०९ ॥

चेत चेत झटित्यात्मन् !! शुद्धरूपं निभालय ।
एतत्संसाररूपं तु मायाजालं स्फुटं तव ॥ ११० ॥

इदानीं भ्रान्ति मुत्सृज्य स्वान्तर्दृष्ट्या विलोकय ।
अन्तर्दृष्ट्या निजालोके गुणसृष्टिः प्रकाशते ॥ १११ ॥

तिरोभावनिजर्द्धीना-माविर्भावः प्रकाशनम् ।
परमात्मपदं तत्तु तत्पदस्याऽस्मि किंकरः ॥ ११२ ॥

तत्पदं येन विज्ञातं ध्यानं तत्राऽस्ति यस्य च ।
धृतं साधुपदं तेन शुद्धज्ञानं च तस्य हि ॥ ११३ ॥

तत्पदानुपयोगेन यो याति व्यवहारतः ।
तैलयंत्रवृषस्येव संसारो नैव नश्यति ॥ ११४ ॥

हृष्यान्नवरसज्ञानैः काव्यं कुर्यादनेकशः ।
तत्पदानुपयोगेन भस्मनीव घृतद्रवः ॥ ११५ ॥

ददाति नरकं तर्को यस्यात्मज्ञान मस्ति न ।
शब्दशास्त्रात्सुसंभिन्नं गुणवदात्मनः पदम् ॥ ११६ ॥

पौराणिकः कथां वक्ति चारणाश्चित्तरञ्जकाः ।
वादं कुर्वन्त्यजाजीवा सर्वे धर्मं विना वृथा ॥ ११७ ॥

आत्मभानं न चेच्चित्ते क्रियाकाण्डो न मुक्तिदः ।
आत्मोपयोगिसाधूनां धर्मकर्मगुणाकरः ॥ ११८ ॥

आत्मोपयोगिसाधूनां क्रिया सद्गुण धाम हि ।
मतहठातिमग्नानां दुःखधामाऽखिलक्रियाः ॥ ११९ ॥

उपाधितो जलानां च भिन्नावस्था प्रजायते।
तथैव तन्मनुष्याणां भवेषु भ्रमणं भवेत् ॥ १२० ॥

उपादानं न जानाति निमित्तं चाऽपि नो पुनः।
न कार्यकारणे वेत्ति तत्त्वे तस्य कथं मनः ॥ १२१ ॥

द्रव्यभावं न जानन्ति बाह्याचारे प्रवर्तिनः।
भवपारं न गच्छन्ति निजात्मानुपयोगिनः ॥ १२२ ॥

प्रमादी शिथिलाचारी यद्रागो विषयेष्वपि।
सद्गुरुः कृष्णसर्पाभः स त्याज्य आशु धीधनैः ॥ १२३ ॥

यच्चित्ते ललनावासो ब्रह्मचर्योपदेशकः।
स गुरुः कृष्णसर्पाभ–स्तत्संगो न विधीयताम् ॥ १२४ ॥

वैराग्यं विषयत्यागो वनितासंगवर्जकः।
धनस्वर्णपरित्यागी तं गुरुं प्रणमाम्यहम् ॥ १२५ ॥

विषयाशा गता चिन्ता यद्वशे चित्तमर्कटः।
भवभीरु र्गतभ्रान्ति–स्तस्य दासो भवाम्यहम् ॥ १२६ ॥

वसेदात्मस्वभावेषु तत्स्वरूपं लभेत च।
आत्मन्यात्मविचारेण नश्येद्दुःखमनादिजम् ॥ १२७ ॥

आत्मनो नास्ति जातिश्च यो जातेरभिमानवान्।
स धर्मं लभते नैव निश्चितं विद्धि चेतसि ॥ १२८ ॥

अस्ति देहाश्रितं लिंगं भिन्नं तच्च निजात्मतः।
रक्तो भवामि किं तत्र दीनो दुःखी च लेपतः ॥ १२९ ॥

वर्णाश्रमविभेदेन धर्मं जानन्ति ये पुनः।
सत्यधर्मं न गृह्णन्ति बध्नन्ति कर्म केवलम् ॥ १३० ॥

कुलाचारस्य रीतौ ये धर्मं जानन्ति मानवाः।
न धर्ममर्म जानन्ति नित्यं शर्म भजन्ति न ॥ १३१ ॥

सत्यधर्मं न जानन्ति तथाप्युपदिशन्ति ते।
धर्ममर्मावबोधेन विना क्लेशं वहन्ति ते ॥ १३२ ॥

अतिस्त्रीविषयासक्ति स्त्यागवैराग्यवर्जितः।
लज्जयेत्साधुवेषं स यस्य चित्तं सदा चलम् ॥ १३३ ॥

शिष्यो भूत्वाऽतिकोपेन वर्तते गुरुणा सह।
करोत्यात्महितं नाऽसौ विनयी याति सत्पथम् ॥ १३४ ॥

कपटी कृष्णकाकाभः कर्मचाण्डालकागुरुः।
तत्संगो नैव कर्तव्यः संभ्रमच्चक्रवद्भवे। ॥ १३५ ॥

त्यक्त्वा बाह्यममत्वं त्वं धनमन्तर्विलोकय।
अन्तर्धनं हि धर्मोऽस्ति सत्यमेवं विचारय ॥ १३६ ॥

ऋद्धयोऽन्तर्धनस्यैता अरूपा स्त्वयि संस्थिताः।
ताश्च विस्मृत्य रे जीव !! किमन्यत्र प्रयास्यसि ॥ १३७ ॥

दुःखान्यन्यप्रयासेन पराधीनोऽन्यसंगतः।
लीनोऽन्यपरिणामे यो भवान्तं न करोति सः ॥ १३८ ॥

वक्रं भ्रमति संसारी त्यागिनां सरला गतिः।
भवभञ्जनवीरेभ्यो गुरुभ्योऽस्तु नमोनमः ॥ १३९ ॥

लग्नमाञ्जिष्ठरागस्तु कदापि नैव नश्यति।
तद्वन्निजात्मरागेण कदाचिन्न विनश्यति ॥ १४० ॥

पुत्रपुत्रीस्वदारेभ्योऽप्यधिकं प्रेम चेद् गुरौ।
प्राणाधिकगुरुप्रेमी भवाब्धिं तरति स्वयम् ॥ १४१ ॥

एक एव गुरुर्देवः पिता तत्र न संशयः।
धर्मगुरुः स एकोऽस्ति मुनिरन्यो गुणालयः ॥ १४२ ॥

सदा धर्मगुरोरिप्सा भक्ति धर्मगुरोः सदा।
वह धर्मगुरु चित्ते सेवस्व स्वस्वशक्तितः ॥ १४३ ॥

सेवनाच्छारवती सम्पत् दूरं दारिद्र्यमीक्षणात् ।
वन्दनाल्लाति वन्द्यत्वं गुरवो गिरिभिः समाः ॥ १४४ ॥

अजोऽविनश्वरो जीवो ह्यखण्डानन्दपूरवान् ।
अन्तर्दृष्ट्यावलोकेन स्वयमात्मा स्वसन्निधौ ॥ १४५ ॥

स्वधर्मं चेतने पश्य बहिर्ध्यानं करोषि किम् ।
बाह्यदृष्ट्यावलोके तु भवः स्यादरहट्टवत् ॥ १४६ ॥

ध्यानं च धारणां कृत्वा स्वात्मरूपं विलोकय ।
बाह्योपाधिपरित्यागै श्चिद्रूपं शाश्वतं भव ॥ १४७ ॥

जगद्वदति मूढोऽयं जगन्मूढं हि वेत्ति सः ।
आत्मवित्सुखमाप्नोति ह्यन्तर्गुह्यमिदं यतः ॥ १४८ ॥

रागद्वेषपरीणामग्रन्थिस्तत्र तु छिद्यते ।
पुद्गलमोहशून्यत्वा--च्छान्तिश्च सहजा भवेत् ॥ १४९ ॥

भासते त्वेक एवात्मा सोऽहं सोऽहं समाधितः ।
तत्त्वमस्यात्मकाकारे चिदानन्दात्मकः प्रभुः ॥ १५० ॥

तथैवात्मदशा जाता स्थैर्य्यं च स्वगुणान्तरे ।
वशे मनःकपि र्यस्य क्वचिद्दुःखं न पश्यति ॥ १५१ ॥

बाह्यरागेण जीवाश्च स्वेच्छाचाराश्च मुण्डिताः ।
वञ्चयन्ति जनान्पापा धूर्ता आटोपकारिणः ॥ १५२ ॥

पानेऽशने तथाऽऽधाने वेषे धर्माभिमानिनः ।
सत्यधर्मं न जानन्ति प्रत्युत कर्मबन्धकाः ॥ १५३ ॥

सत्यदेवं न जानाति मिथ्या शिक्षां ददाति च ।
उदरार्थी हठी क्लेशं लभते कुगुरुः स्वयम् ॥ १५४ ॥

न जहाति मनोमायां त्यागिवेशं दधाति च ।
कौपीनवस्त्रतो लोकान् वञ्चयत्येव वञ्चितः ॥ १५५ ॥

धनाशाधारका धूर्ता वञ्चयन्ति जनान्भृशम् ।
आत्मधर्मं विना धर्मो नास्ति मालादिधारणात् ॥ १५६ ॥

मत्वा मिथ्या च संसारं तस्य मोहं परित्यजन् ।
योगाभ्यासरतो भूत्वा नाशयत्यखिलं मलम् ॥ १५७ ॥

स्वगुणान्वेषणेनैव नश्यति कर्मणां मलम् ।
तदा प्रकाशते स्वान्त–श्चिदानन्दविलासनम् ॥ १५८ ॥

स्वर्द्धिज्ञानान्निजात्माऽयं व्यक्तत्वेन निरीक्ष्यते ।
बाह्यर्द्धिमोहतो दीना भ्रमन्ति मोहतो भवे ॥ १५९ ॥

यौवनं च धनं देहो विद्युद्भाइव कृत्रिमम् ।
न सहैति भवेऽन्यस्मिन् मूढा मुह्यन्ति तत्र हि ॥ १६० ॥

केचिज्जीवा जडर्द्ध्यर्थं घ्नन्ति जीवाननेकशः ।
धूल्याभं जीवनं तस्य भस्माभं तद्विजानत ॥ १६१ ॥

जनान्वञ्चयति स्वार्थं प्रोच्याऽसत्यवचश्च यः ।
भूत्वा सत्कर्मणां गोणी दुःखी जन्मनि जन्मनि ॥ १६२ ॥

स्तेनः कर्णजपोऽन्येषा मपमानी च निन्दकः ।
स्वार्थी जनश्च संसारे–नरकस्यातिथि र्मतः ॥ १६३ ॥

प्रशंसयति चात्मान–मभिमानं करोति च ।
लभते धर्मगुह्यं न निर्विवेकी च पापवान् ॥ १६४ ॥

चित्ते परापकर्षेऽस्ति तथाऽन्यस्य कलङ्कदः ।
योमुदाऽऽरभते पापं गालिं दत्तेऽतिकोपतः ॥ १६५ ॥

पापपुण्ये न जानाति गुरुबोधं दधाति न ।
जीवो नास्तिकवादी स किं शोधयति चेतनम् ॥ १६६ ॥

एकान्तं यो मतं धत्ते सोऽज्ञानी जीव उच्यते ।
भवे भ्राम्यत्यसौ नित्यं न धत्ते शाश्वतं सुखम् ॥ १६७ ॥

केचिल्लोकाश्च मन्यन्ते कर्तारमीश्वरं भुवि ।
ईशो दुःखं सुखं दत्ते वचोऽप्येतन्मृषा मतम् ॥ १६८ ॥

द्वौ भेदावीश्वरस्य स्तो जीवसिद्धप्रकारतः ।
स्वस्वकर्मविधातारं जीवं जानत चेतसि ॥ १६९ ॥

कृत्वा कर्म नवं जीवः स्वस्य दुःखसुखप्रदः ।
कर्ता भोक्ता च जीवोऽस्ति जीवः स ईश्वरो मतः ॥१७०॥

चेतनमीश्वरं विद्धि व्यवहारनयेचतः ।
ईश्वरोऽशुद्धनीत्याऽस्ति सापेक्ष मिति जानत ॥ १७१ ॥

कर्ताऽन्यपरिणामेन चेतन ईश्वरो भवेत् ।
शुद्धनिश्चयनीत्या तु कर्म नैव करोति सः ॥ १७२ ॥

सुखकर्ता स्वभावेन दुःखकर्ताऽविभावतः ।
आत्मा स्वगुणकर्ताऽन्यपरिणामाविनाशतः ॥ १७३ ॥

एकान्तपक्ष माधत्ते वेत्ति सापेक्षया नहि ।
संवदन्नीशकर्तृत्वं भ्रान्तः स निरपेक्षतः ॥ १७४ ॥

यस्य कर्ममलं नास्ति निराकारः प्रभुः स्मृतः ।
कस्मै प्रयोजनायेशो जगत्कर्तेति जानत ॥ १७५ ॥

नाभिमानं नचेच्छाऽस्ति शिवसिद्धपरप्रभौ ।
किं स सृष्टिविधाता स्याज्ज्ञानं विस्मृत्य मन्यसे ॥ १७६ ॥

उपादानं यथैव स्यात्कार्यं भवति तादृशम् ।
निराकारेण चेशेन जडसृष्टि र्न रच्यते ॥ १७७ ॥

अभिन्नं जायते कार्य मुपादानाख्यकारणात् ।
ईश्वरश्चे दुपादानं सृष्टिरूपस्ततो भवेत् ॥ १७८ ॥

उत्पत्तौ चेद्भवेदीशो निमित्तं नामकारणम् ।
नित्या शक्ति स्तदेशस्य वाऽनित्येति विचारय ॥ १७९ ॥

किम्वा निमित्तहेतोः स्याद् विनोपादानकारणम् ।
उपादानं च को वाच्यः सत्यं ज्ञानेन वेद्यते ॥ १८० ॥

जायते कार्यतः पूर्वं सद्भावः कारणस्य च ।
कार्यं मेवंविधं न स्याद् विनोपादानकारणम् ॥ १८१ ॥

अतिभिन्न मुपादाना-न्निमित्तं कारणं सखे !
शक्तिभि र्भिन्नाभिन्नाभि रेकयोगः कथं भवेत् ॥ १८२ ॥

ईश्वरो नहि कल्प्येत कदापि सृष्टिकारणम् ।
न चेत्स रासभोऽपि स्यात्सद्युक्तिर्न्याय ईक्ष्यताम् ॥ १८३ ॥

पृथ्व्यादिपरमाणूँश्चेद् धृत्वा सृष्टिं करोति सः
एवं चेदीश्वरे विद्याच् चैतन्यं कुत आगतम् ॥ १८४ ॥

परमाणुसमूहैस्तु जडकार्यं प्रजायते ।
चेतनस्तु ततो भिन्नः पावकोऽस्ति यथाऽरणौ ॥ १८५ ॥

अनादिपुद्गलद्रव्यं तथा जीवोऽप्यनादिकः ।
निश्चयेन द्वयं भिन्नं भिन्नशक्ति मपि स्मर ॥ १८६ ॥

जडे जीवपरीणामो व्यवहारनयात्खलु ।
विनाऽनेकान्तविज्ञानं सम्यक् सारमुपैति न ॥ १८७ ॥

द्रव्याण्यनादिकालेन षट् तत्कर्तेश्वरः कथम् ।
ईशशक्तिरनित्याऽस्ति नित्या वेति विचारय ॥ १८८ ॥

नित्या कर्तृत्वशक्ति श्चेज्-जगन्नित्यं भवेत्त दा ।
ईशशक्ति रनित्या चेद्विनश्येत्तज्जगत्क्षणे ॥ १८९ ॥

यथा कर्तृत्वशक्तिःस्या-त्कार्यं भवति तादृशम् ।
नित्यानित्यविवेकेन पक्षौ द्वावपि दूषितौ ॥ १९० ॥

यदीशः साकृतिः कथ्य स्तदाऽपि दूषणं भवेत् ।
पूर्वापरविचारेण दोषा आयान्ति भूरिशः ॥ १९१ ॥

नैयायिका वदन्त्येवं सत्यं कर्त्तेश्वरो मतः ।
किन्तु युक्त्याऽवलोकेन तदसत्यं हि भासते ॥ १९२ ॥
ईशेच्छया कदाचिच्च सृष्टि र्निर्मीयते नहि ।
निमित्तेच्छा यदि प्रोच्या स्वभावोऽपि कथं नहि ॥ १९३ ॥
तत्र लभ्यं प्रमाणं किं दूरे कार्यः कदाग्रहः ।
स्वभावयुक्तित श्चेत्स्यान्नहि दोष स्तदा भवेत् ॥ १९४ ॥
तिरोभावात्मिका शक्ति-र्योपादाने प्रवर्तते
तदाऽऽविर्भावतैवाऽस्ति निजव्यक्तिः प्रपूरिता ॥ १९५ ॥
वर्ततेऽनादिकालेन शुद्धशक्तिश्च वस्तुनि ।
आविर्भावाय तस्याऽस्तु निमित्ताभिधकारणम् ॥ १९६ ॥
आविर्भावस्तु धर्मस्य-कार्यरूपं हि जायते ।
घटस्य मृत्तिका हेतु रनन्यं कार्यमुच्यते ॥ १९७ ॥
नश्यति कारणं नैव घटनाशे कृते सति ।
नित्यत्वाद्वर्तते हेतु र्मृत्तिकारूपमेव सः ॥ १९८ ॥
स्वभावो नियतिः काल उद्यमः कर्म पंच च ।
कार्यं प्रति सदा हेतु र्मनस्यन्यन्न चिन्तय ॥ १९९ ॥
रागरोषौ न यस्य स्त ईश्वरः स च कथ्यते ।
तस्येच्छा चेत्प्रवाच्या स्या दीश्वरत्वं तदा व्रजेत् ॥२००॥
ईश्वरः कृतकृत्योऽभू-दिष्यते तेन किं पुनः ।
इच्छा यत्र ततो राग-द्वेषौ ताभ्यां च दुर्गतिः ॥ २०१ ॥
इच्छा हि भवमूलं स्याद् रागद्वेषसहायिनी ।
ईश्वरेच्छा यदा प्रोक्ता प्रतीपो मोह आगतः ॥ २०२ ॥
नेच्छा तत्र कथं सौख्य मेवं चेत्कोऽपि संवदेत् ।
समाधौ तु सुखानन्त्य मिच्छा तत्र न जायते ॥ २०३ ॥

न जन्येत जडं वस्तु, श्रीश्वरेण कदाचन।
नेशे जडस्वभावोऽस्ति चेतसीति विचिन्तय ॥ २०४ ॥

अनन्ता शक्तिरीशस्य जडशक्ति र्लघीयसी।
जन्यते सृष्टि रीशेन युक्ति मेतां विचारय ॥ २०५ ॥

युक्तिहीनविवादोऽस्ति श्रीशकर्त्तृत्ववादिनः।
धर्मौ जडेशयो द्वौ हि भिन्नौ तौ स्तो दिवानिशम् ॥ २०६ ॥

द्वयोरपि पृथग् धर्मौ द्वावपि भिन्नधर्मिणौ।
साकारोऽन्यो निराकारो रूप्येको रूपवर्जितः ॥ २०७ ॥

अनन्ता पौद्गली शक्ति श्चिच्छक्तिरपि भूयसी।
ज्ञातृत्वं चेतनाशक्ति र्जडशक्तिस्तु पौद्गली ॥ २०८ ॥

तत्र शक्तिः स्वभावेन परतन्त्रो न कोऽप्यथ।
निश्चयनयतो विद्धि ज्ञानी वदति चेदृशम् ॥ २०९ ॥

अस्तिताऽनन्तशक्तीनां,—निजद्रव्येण वर्तते।
परापेक्षां च संगृह्य नास्तिताऽपि प्रवर्तते ॥ २१० ॥

अस्तिताऽनन्तशक्तीनां,—नास्तितैवाऽवलोक्यते।
षड्द्रव्यव्यापिनीं तां तु निश्चयेनेति जानत ॥ २११ ॥

चेतनाच्चेज्जडोत्पत्तिः खराच्छृंगं तदा भवेत्।
स्वप्नसुखाशिकां सत्यां तदा सत्येन जानत ॥ २१२ ॥

ईशस्यानन्तशक्तिस्तु श्रीश्वर एव भाति सा
कूपच्छाया यथा कूपे तद्वन्न्यायं विचारय ॥ २१३ ॥

जडशक्ति रनन्ताऽस्ति दृश्या पुद्गलधर्मतः।
वर्णादिकमभूत्तत्र नान्यः कर्त्ताऽस्ति कश्चन ॥ २१४ ॥

निजाऽऽत्मापेक्षया शक्ति र्जडस्याऽस्ति लघीयसी।
ज्ञात्वा सापेक्षया सर्वं क्लेशं चेतसि मा कुरु ॥ २१५ ॥

तालपूटविषांशेन हन्यन्ते हस्तिनोऽसवः ।
स्वस्वधर्मैं र्महत्सर्व-मनेकान्तनयेन तत् ॥ २१६ ॥

ईश्वरेण कृता सृष्टिः कदापि नैव कथ्यते ।
विवेकिनश्च जानन्ति हृदि सद्युक्तिमाप्य च ॥ २१७ ॥

तदर्थ एक एवाऽस्ति जीवो वाच्योऽथ चेतनः ।
ईश्वरसम आत्माऽस्ति कर्त्ता त्वीशो न निश्चितः ॥ २१८ ॥

चतुरशीतियोनौ तु जीवा आमन्त्यनन्तशः
ते कर्माष्टकयोगेन लभन्ते दुःखसंचयम् ॥ २१९ ॥

अनादिकालतो धृत्वा कर्मराशिं स जीवति ।
बध्यते त्यज्यते कर्म पराशां कुर्वताऽऽत्मना ॥ २२० ॥

भवितव्यत्वयोगेन कर्मनाशश्च जायते ।
अचलात्मस्वरूपस्य विकाशः स्यात्स्वभावतः ॥ २२१ ॥

ईशो विभुः परब्रह्म सुखधाम परेश्वरः ।
सोऽहंसोऽहं पदप्राप्तं प्रणमामि तमीश्वरम् ॥ २२२ ॥

कर्मक्षयेण जीवस्तु जायतेऽनन्त ईश्वरः ।
एकानेकात्मसिद्धात्म-तत्त्वं ज्ञान्यवगच्छति ॥ २२३ ॥

कर्मक्षयात्समाः सिद्धा ज्ञानी जानाति बोधतः ।
भिन्नास्ते व्यक्तिरूपेण तुल्या व्यक्तगुणै स्तथा ॥ २२४ ॥

रागद्वेषौ न यस्य स्तः परभावे रति र्नहि ।
अनन्तात्मस्वरूपे यः रममाणः स शुद्ध्यति ॥ २२५ ॥

ध्यानेन चेतनं स्वीयं वेत्ति तत्प्रभुणा समम् ।
ध्याता ध्येयं तथा ध्यानं तदैक्येन भवेत्प्रभुः ॥ २२६ ॥

सहस्रधा त्वहं वन्दे तादृशं सिद्धमीश्वरम् ।
सम्यग्बोधेन तस्याहं भवपारं लभे यथा ॥ २२७ ॥

सम्यज्ज्ञानक्रियाभ्यां तु साक्षान्मोक्षः प्रजायते ।
आत्मनो ध्यानबोधाभ्यां मोक्षं त्वरितमाप्नुहि ॥ २२८ ॥

ब्रह्मणः सृष्टिरुत्पन्ना ब्रह्मरूपमदोऽखिलम् ।
व्यापकः सोऽस्ति सर्वत्र चिदानन्दो गुणालयः ॥ २२९ ॥

मायाया अतिवेगेन ब्रह्मभानं च विस्मृतम् ।
एकरूपं हि सर्वत्र ज्ञानमद्वैतवादिनः ॥ २३० ॥

शुद्धस्य ब्रह्मणोंऽशा हि येऽनन्ता जीवराशयः ।
परमात्मनि ते मान्ति द्वैतत्वेन न पश्यत ॥ २३१ ॥

मन्यन्ते ब्रह्मणो ज्ञानं ब्रह्मध्यानेषु तत्पराः ।
द्वैतत्वं नैव मन्यन्ते वाक्यमद्वैतवादिनाम् ॥ २३२ ॥

सत्यमाच्छाद्यते नैव सत्यमाच्छाद्य मस्ति न ।
वंशपात्रेण सूर्य्योऽय माच्छाद्यते कदापि न ॥ २३३ ॥

जडचेतनभेदेन द्वैतत्वं च प्रकाशते ।
एकरूपं कथं ब्रह्म सुखं दुःखं भुनक्ति तत् ॥ २३४ ॥

जडो जडतयाऽस्त्येव जडनाशः कदापि न ।
तदसद्वाचि को हेतु-र्ज्ञानिन् !! धन्योऽसि युक्तिमान् ॥ २३५ ॥

जीवाजीवौ तु तत्त्वे द्वे वेद्येते ज्ञानिना स्वयम् ।
मुधैकस्मिन् वृथा ज्ञाते सम्यग् धर्मो न संभवेत् ॥ २३६ ॥

ज्ञानी ज्ञानेन गृह्णाति सत्यरूपं हि वस्तुनः ।
द्वैतत्वं मन्यते चाऽपि भवकूपे न मज्जति ॥ २३७ ॥

एक एव हि भूताऽऽत्मा जीवे जीवे व्यवस्थितः ।
चन्द्रबिम्बं जले यद्वत् तद्वन्न्यायं विचारय ॥ २३८ ॥

एकान्तब्रह्मसत्तां च मन्यन्तेऽद्वैतवादिनः ।
एकान्तसंग्रहेणाऽसौ भवाब्धिं च कथं तरेत् ॥ २३९ ॥

आदौ विषमदृष्टान्तैः कथम रूपिणां भवेत् ।
रूपिणां प्रतिबिम्बश्च कथमरूपिणां भवेत् ॥ २४० ॥

पुद्गलप्रतिबिम्बन्तु दृष्टान्तश्चन्द्रमा जले ।
अरूपिवस्तुजीवेऽस्ति प्रतिबिम्बन्तु ते भ्रमः ॥ २४१ ॥

त्वं प्रतिबिम्बकं विद्धि भिन्नं हि प्रतिबिम्बतः ।
प्रतिबिम्बकभावेन प्रतिबिम्बश्च खेदितम् ॥ २४२ ॥

प्रतिबिम्बस्य चन्द्रस्य भिन्नत्वमेव वर्तते ।
कथं साध्यस्य सिद्धिः स्या-देक एवाऽस्ति ब्रह्मराट् ॥२४३॥

व्यापकैकात्मनो नांशा भवन्ति जीवराशयः ।
भिन्नभिन्नैश्च जीवांशै- आत्मा न दृश्यते ॥ २४४ ॥

आत्मैक्येन तु सर्वेषां युगपत्सुखदुःखता ।
सुखदुःखसमाच्छादा द्वैतं जडचिदात्मनोः ॥ २४५ ॥

घटाकाशाभिधोपाधे-श्चेद्भेदो नभसो मतः ।
नात्र तथा विधोपाधि र्वारकः सुखदुःखयोः ॥ २४६ ॥

समकालं सुखं दुःखं प्रतिभासेत देहिनाम् ।
अधिकन्यूनसम्प्राप्ते-रवकाशो न सम्मिलेत् ॥ २४७ ॥

नावकाशं मिलेत्तस्य कारणं किं प्रवर्तते ।
भिन्नं भिन्नं विनाऽऽत्मानं घटते कोऽपि नाऽपरः ॥ २४८ ॥

सर्वे हि व्यक्तितो भिन्नाः सर्व एकस्तु सत्तया ।
आत्मतत्त्वाऽवबोधेन चैकोऽनेकः प्रवेद्यताम् ॥ २४९ ॥

सर्वत्र व्यापकोक्तौ तु काऽपि युक्ति र्न विद्यते ।
ज्ञेयं सम्मतितर्काख्ये ग्रन्थे दृष्ट्वा मयोच्यते ॥ २५० ॥

सर्वत्र व्यापक श्चेत्सः पिण्डे तद्बध्यते कथम् ।
देहेषु व्यापकश्चेत्स्यात्तदाऽव्यापक एव सः ॥ २५१ ॥

व्यापको बध्यते नैव पंकेनैव यथा नभः ।
अन्यथा सुखदुःखानां प्राप्तिः स्यात्सर्वतः खलु ॥ २५२ ॥

सर्वत्र व्यापकश्चेत्स्या त्कदापि नव बध्यते ।
मन्यते चाऽज्ञता तर्हि सद्युक्ति नैव दृश्यते ॥ २५३ ॥

अव्यापक आत्माऽस्ति सन्देह स्तत्र कोऽपि न ।
व्याप्यव्यापकबोधेन निःसन्देहो भविष्यति ॥ २५४ ॥

शैलेशीं हि दशां प्राप्य स्वात्मा व्यापक उच्यते ।
असंख्यातप्रदेशै हिं जानन्तु भव्यमानवाः ॥ २५५ ॥

व्यापकोऽव्यापकश्चाऽस्ति चेतनोऽयं गुणाकरः ।
अनेकान्तावबोधेन शिवधाम लभस्व च ॥ २५६ ॥

साद्यादिभंगयोगेन व्यापकोऽस्त्येष चेतनः ।
स्याद्वादद्दष्टितः सत्यं मनस्यानय बुद्धिमन् !!! ॥ २५७ ॥

केवलज्ञानतः स्वाऽऽत्मा सर्वत्र व्यापकः खलु ।
स्वाऽन्यप्रकाशकः स्वाऽऽत्मा भवत्येव प्रदीपवत् ॥२५८॥

प्रकाशते यदा सूर्यो वर्तते किं तमोभरः ।
ज्ञानदीपप्रकाशेन नान्धकारः प्रवर्तते ॥ २५९ ॥

आत्माऽद्वैतस्वरूपोऽयं जडभिन्नो विचार्यताम् ।
द्वैतत्वमपि तत्राऽस्ति सैकोऽनेकाश्रयः खलु ॥ २६० ॥

आत्माऽक्षरस्वरूपोऽस्ति गुणवानस्त्यनक्षरः ।
आत्माऽसंख्यप्रदेशेषु शुद्धस्थैर्यं प्रवर्तते ॥ २६१ ॥

भासितः स्वात्मनि स्वोऽहं महाऽज्ञान मपासरत् ।
स्वस्य भानं यदा जातं वीर्य्योल्लासस्तदा भवेत् ॥ २६२ ॥

जडेन्द्रियाणि किं कुर्यु स्तेभ्योऽहं तु पृथक् स्थितः ।
तानि जडस्वरूपाणि दीनानि क्षणिकानि च ॥ २६३ ॥

मम नास्ति मनो वाणी जडे कार्ये हि ते ननु ।
नाम्यां सह निवासेन मम लज्जा न रच्यते ॥ २६४ ॥

रमे हसामि कैः सार्द्धं ममत्वं केषु वा दधे ।
मृगनीरोपमा द्रव्ये ममतायाः स्थितिः कुतः ॥ २६५ ॥

जडवस्तुहि मे नास्ति लिप्तः स्याँ किञ्च संसृतौ ।
किमर्थं हेतुना केन मह्यां जन्म गृहीतवान् ॥ २६६ ॥

पतितो व्यर्थपाशेषु शर्म किञ्चिन्न वेद्यते ।
सत्यमार्गप्रवासेन किंचित्ते जायते भयम् ॥ २६७ ॥

शरीरमसि न त्वं तु शरीरं मृद्विकारवत् ।
पतत्यश्वत्थपत्राभं तस्माच्चेतन ! जागृहि ॥ २६८ ॥

सर्वं ज्ञानेन पश्यामि दूरं मत्तोऽखिलं पुनः ।
प्रतिबन्धो न कस्याऽपि शूरोऽहं सिंहसन्निभः ॥ २६९ ॥

रागो द्वेष स्तथा निन्दा व्यनश्यत्तद्बलं बहु ।
आत्मा स्वाभिमुखो भूत्वाऽनुभवं स्वं तनोति च ॥ २७० ॥

शत्रुणा नैव च्छिद्येऽहं भिद्येऽहं नैव शस्त्रतः ।
शत्रौ मित्रे समो भावः कथं वा स्यान्मम भ्रमः ॥ २७१ ॥

सर्वे कर्मवशा जीवा भ्राम्यन्ति निश्चितं भवे ।
पुत्रमित्रवधूभावैः सम्बन्धः सर्वदेहिषु ॥ २७२ ॥

सम्बन्धो न क्वचित्सत्यः संसारः स्वार्थतत्परः ।
कस्यचित्कोऽपि नो भूमौ संवेगं हृदि धारय ॥ २७३ ॥

सिद्धवन्निखिला जीवा निर्मला निश्चलाः सदा ।
करणत्रययोगेन ते सेव्याः शुद्धभावतः ॥ २७४ ॥

द्रव्यार्थिकनये नित्य-स्तस्य नाशः कदापि न ।
असंख्यातप्रदेशेन ध्रुवः स स्वस्वरूपनान् ॥ २७५ ॥

स्वपूर्वजन्मनोऽभ्यासैः सिद्धाऽस्ति जीवनित्यता ।
बाल्ययौवनवार्धक्ये ज्ञाता त्वेको हि वर्तते ॥ २७६ ॥

क्षणे क्षणे शरीरैक्ये स्वात्माऽयं परिवर्तते ।
पापं पुण्यं भवेत्कस्य तद्विवेकं तथा कुरु ॥ २७७ ॥

क्षणिकद्रव्यविज्ञाने स्तं वादं क्षणिकं सर ।
वक्ता न क्षणिको जातो नित्यत्वेन तमानय ॥ २७८ ॥

कस्यचिद्वस्तुनः क्वाऽपि विनाशो नास्ति सर्वथा ।
आत्मनाशप्रवादेन स्वान्यावस्था तदा भवेत् ॥ २७९ ॥

अन्यावस्था न कस्याऽपि तस्मान्नित्योऽस्ति चेतनः ।
प्रत्यभिज्ञाऽनुमानेन स्वात्मा नित्योऽस्ति जानत ॥ २८० ॥

पर्यायाः परिवर्तन्ते ह्यात्मनोऽपि प्रतिक्षणम् ।
तस्मादनित्य आत्माऽय मनेकान्तनये खलु ॥ २८१ ॥

शुभाशुभास्रवं धृत्वा नानादेहान् विभर्त्ययम् ।
भुनक्त्यसातसाते च व्यवहारनयेन च ॥२८२ ॥

सूर्याच्छादकमेघानां नाशात्सूर्यः प्रकाशते ।
तथाऽऽस्रवविनाशेन स्वात्मा ज्ञानेन भासते ॥ २८३ ॥

कर्मसंगापसारेण याति जीवः शिवं पुरम् ।
पुरुषोत्तम आत्माऽयं भवेत्सिद्धो निरञ्जनः ॥ २८४ ॥

अगम्यात्मस्वभावस्य शुद्धाऽऽलम्बनकारकः ।
संवरी चास्रवत्यागी तर्त्ताऽस्ति भवसागरम् ॥ २८५ ॥

योगिनोऽपि यमिच्छन्ति धामानन्यसुखस्य यः ।
नौमि नौमि तमात्मान मनन्तगुणसंश्रयम् ॥ २८६ ॥

शुभात्मनोऽवलम्बेन दोषाः नश्यन्ति भूरिशः ।
जायतेऽनुभवज्योतिः पुण्यात्याऽऽत्मा स्ववीर्यतः ॥ २८७ ॥

कर्मभेदविनाशेन स्वात्मा जिनो भवेत्स्वयम् ।
पूर्णव्यक्तिमयः स्वाऽऽत्मा को राजा कोऽस्ति किंकरः॥२८८॥

तुल्यता सर्वसिद्धानां सिद्धस्थाने च मान्ति ते ।
पीड्यते कोऽपि नो कैश्चिदरूपपदशक्तितः ॥ २८९ ॥

विषमज्वरवेगेन भोजनस्यारुचि र्भवेत् ।
अभव्यादिकजीवानां मोक्षरुचि र्न जायते ॥ २९० ॥

सम्यग्ज्ञानप्रभावेण बहिरात्मपदात्ययः ।
वासः शिवपुरस्य स्या-दन्तरात्मगुणोदयात् ॥ २९१ ॥

समूलं तत्र छिद्यन्ते परप्रवृत्तिहेतवः ।
अन्तः परप्रभुत्वं तु समभावेन जायते ॥ २९२ ॥

परभावस्य कर्ताऽहं भवमूलमियं मतिः ।
अन्तरात्मपदो योगै र्निर्दोषो जायते स्वयम् ॥ २९३ ॥

स्वप्नाश्च कोटिवर्षाणां क्षीयन्ते जागृतिक्षणे ।
तथाऽऽत्मज्ञानमात्रेण क्षणादात्मा प्रभु र्भवेत् ॥ २९४ ॥

देहे चेतनबुद्धि र्या देहाध्यासं विजानत ।
देहाध्यासविनाशेन कर्मदोषोऽपि नश्यति ॥ २९५ ॥

कर्मणां नैव कर्ताऽहं तेषां भोक्ताऽपि नास्म्यहम् ।
शुद्धदशाप्रकाशे तु भवभीति र्विनश्यति ॥ २९६ ॥

मोक्षश्चेतनधर्मेण मोक्षरूप स्त्वमस्यहो ।
रत्नत्रय्याश्च भोगी त्वं भूपः क्षायिकशर्मणाम् ॥ २९७ ॥

जायन्ते वीचयोऽम्भोधौ विनाशं यान्ति तत्र हि ।
चेतनस्य तथा ज्ञानं ज्ञेयत्वात्परिवर्तते ॥ २९८ ॥

शुद्धोऽथ निर्मलो बुद्धः स्वयंज्योति र्गुणालयः ।
चेतनोऽयं चिदानन्दः परानन्तगुणाकरः ॥ २९९ ॥

ज्ञानिनामात्मविज्ञाने मतमेकं प्रवर्तते ।
शिवपुर्यां भवाधीशो योगत्रयस्य रोधनात् ॥ ३०० ॥

रोगादिघोरशत्रूणां यत्र गन्धो न वर्तते ।
आत्मलक्ष्येदृशे जाते कर्मबन्धो न जायते ॥ ३०१ ॥

ध्यानेन देहनिष्ठोऽपि देहातीतः प्रवर्तते ।
बहुवारं त्रियोगेन वन्देऽहं तं महामुनिम् ॥ ३०२ ॥

पौद्गलं सौख्यमुच्छिष्टं जगत्स्वप्नेन सन्निभम् ।
शुद्धं किन्त्वात्मनो ज्ञान मन्यज्ज्ञानं च वाचिकम् ॥ ३०३ ॥

यस्य ज्ञाने प्रजाते तु दशा शान्ता प्रकाशते ।
धर्मो यत्र ततो विद्धि निश्चयेन सुखप्रदम् ॥ ३०४ ॥

नैगमः संग्रहश्चाथ व्यवहारस्तृतीयकः ।
ऋजुसूत्रं चतुर्थोऽस्ति नयःशब्दोऽस्ति पंचमः ॥ ३०५ ॥

षष्ठःसमभिरूढाख्य एवंभूत श्च सप्तमः ।
सत्यः सप्तनयै र्धर्म,-रूप एवं प्रकाशते ॥ ३०६ ॥

पूर्णं सप्तनयैरेवं वस्तुरूपं विलोक्यते ।
नयैकान्तहठेन स्या,-न्मिथ्यात्वी मानवः पुनः ॥ ३०७ ।

सप्तनयावबोधेन सम्यगनुभवो भवेत् ।
आत्मतत्त्वपरीक्षात-स्तीर्यते हि भवाम्बुधिः ॥ ३०८ ॥

ऋजुसूत्रनयाभासात्प्रजातं बौद्धदर्शनम् ।
नयमेकान्तमाधत्ते नात्मशुद्धिं करोति सः ॥ ३०९ ॥

जीवादिनवतत्त्वेषु युज्यन्ते सप्त ते नयाः ।
सद्गुरोः सेवनादेव नयज्ञानं प्रजायते ॥ ३१० ॥

स्यादस्ति भंगसूत्रेऽह-मनेकान्तमताश्रयम् ।
सर्ववस्तुषु चाऽस्तित्व मेवं ज्ञानी वदत्यथ ॥ ३११ ॥

स्वद्रव्येण स्वकालेन स्वक्षेत्रेण स्वभावतः ।
अस्तित्वमितिभंगेन स्वद्रव्ये चित्तमानय ॥ ३१२ ॥

जीवादिनवतत्त्वेषु स्यादस्ति भंग आदिमः ।
कदापि नहि यद्वस्तु तत्कदापि न जायते ॥ ३१३ ॥

धर्माधर्मौ नभः कालो जीवस्तथा च पुद्गलः ।
षड्द्रव्येष्वस्तिभंगो हि समयं प्रति वर्तते ॥ ३१४ ॥

साम्प्रतं भाविभूतेषु त्रिकालेषु प्रवर्तते ।
स षड्द्रव्येषु वेत्तव्यः स्यादस्तिभंग आदिमः ॥ ३१५ ॥

समये समये ज्ञेया तदनन्तगुणाऽस्तिता ।
वर्तमाना निजद्रव्ये सिद्धान्ते प्रतिभाषिता ॥ ३१६ ॥

द्रव्ये द्रव्ये विबोद्धव्या भिन्नभिन्ना हि चाऽस्तिता ।
द्रव्यगुणपर्यायाणा मस्तिता माति चात्मनि ॥ ३१७ ॥

ये च पुद्गलपर्याया दृश्या घटपटादयः ।
अस्तितां च तदाकारां साद्यन्तत्वेन पश्यत । ॥ ३१८ ॥

द्रव्यार्थिकनयो ज्ञेयो भंगोऽनादिरनन्तकः ।
अस्ति स पुद्गलव्यापी सादिः सान्तश्च पर्ययैः ॥ ३१९ ॥

स्यान्नास्तिभंग मन्यं तु नास्तिताज्ञानकारकम् ।
षड्द्रव्यव्यापिनं तं च विद्धि सापेक्षया पुनः ॥ ३२० ॥

अन्यद्रव्याऽन्यकालाभ्या मन्यक्षेत्रान्यभावतः ।
नास्तिताऽन्यपदार्थानां सदा स्वेषु प्रवर्तते ॥ ३२१ ॥

परापेक्षां च संगृह्य नास्तिता घटते निजे ।
षड्द्रव्ये परभावेन नास्तिता च प्रवर्तते ॥ ३२२ ।

परद्रव्यास्तिता या च नास्तिता सैव वर्तते ।
परिणमति सर्वत्र स्वस्वद्रव्येष्वपेक्षया ॥ ३२३ ॥

घटेते द्वौ न चैकत्र एवं पृच्छति पृच्छकः ।
नैको हि घटते धाम तेजोन्धयो र्विरोधिनोः ॥ ३२४ ॥

नैकस्मिन् ब्रह्मसूत्रेण नैकत्र द्वौ च तिष्ठतः ।
अस्तिता नास्तिता क्वापि नैकत्र तद्गुरोऽस्ति किम्? ॥३२५॥

घटतेऽपेक्षया सर्वं तथा सर्वं च वेद्यते ।
पितृत्वमथ पुत्रत्व-मेकत्र द्वेऽपि तिष्ठतः ॥ ३२६ ॥

परत्र नास्तिरूपं तदस्तित्वं चेतनस्य यद् ।
नान्यत्र यदि नास्तित्वं वस्तुरूपं न सम्भवेत् ॥ ३२७ ॥

अस्तिता न विनाऽपेक्षां नास्तिताऽपि न तां विना ।
नैकस्मिन्निति सूत्रं तु स्याद्वादेनावलोक्यते ॥ ३२८ ॥

अस्तिता यत्र कालेऽस्ति तत्कालेऽस्ति च नास्तिता ।
वर्तनां चैककालेषु षड्द्रव्येषु विलोकय ॥ ३२९ ॥

स्यादस्तिनास्तिभंगश्च तृतीयः कथितः पुनः ।
षड्द्रव्यव्यापको ज्ञेयो जैनदर्शनमर्म तद् ॥ ३३० ॥

अस्तिशब्दसमुच्चारे यान्ति काला असंख्यशः ।
नास्तिशब्दसमुच्चारे तथैव भगवान् जगौ ॥ ३३१ ॥

एकस्मिन् समयेऽवाच्य मस्तिनास्तिस्वरूपकम् ।
तुर्यभंगोऽस्त्यवक्तव्यः कथितः सूरिपुंगवैः ॥ ३३२ ॥

अस्तिधर्मा अनन्ता हि येऽत्र वाचामगोचराः ।
स्यादस्त्यवाच्यभंगोऽयं पंचमः परिकीर्तितः ॥ ३३३ ॥

अनन्ता नास्तिधर्मास्तु वस्तुमध्ये वसन्ति हि ।
स्यान्नास्त्यवाच्यभंगोऽयं षष्ठोऽपि परिकीर्तितः ॥३३४॥

अस्ति नास्ति सदा द्वौ स्तो निर्वक्तव्या विमौ मतौ ।
स्यादस्ति नास्त्यवक्तव्यो युगपत्सप्तमो मतः ॥ ३३५ ॥

गुरुगमावबोधेन सप्तभंगीं विचार्य च ।
आत्मस्वभावमध्यस्थो भवदुःखं निवारय ॥ ३३६ ॥
तत्त्वबोधोऽतिगम्भीरो जानन्ति विरला जनाः ।
भवं तरति मेधावी कृत्वा कर्मक्षयं द्रुतम् ॥ ३३७ ॥
सिद्धानां गुणपर्याये सप्तभंगी प्रवर्तते ।
जायते शुद्धसम्यक्त्व–मनेकान्तावबोधतः ॥ ३३८ ॥
षड्द्रव्यनवतत्त्वानां सत्यज्ञानं यदा भवेत् ।
ज्ञानी जन स्तदा शीघ्रं लभते श्रीशिवं पदम् ॥ ३३९ ॥
सम्यक्त्वमोहिनीत्यादे रुपशमादिकं यदा ।
भवेत्तदा हि सम्यक्त्वं जायते भव्यदेहिनाम् ॥ ३४० ॥
स्वगुणस्थैर्यचारित्रा–द्गुणोद्योतश्च जायते ।
परमात्मा स्वयं शुद्धः शुद्धज्योतिः प्रकाशते ॥ ३४१ ॥
गुणस्थानस्य संस्पर्शा त्स्वयं गुणः प्रकाशते ।
परिपूर्णो निजव्यक्त्या लभते चाऽचलं पदम् ॥ ३४२ ॥
षट्स्थानकावबोधेन सम्यक्त्वं च प्रकाशते ।
षट्स्थानकं सदा धेहि जायते च गुणः स्वयम् ॥ ३४३ ॥
आत्मानः सन्त्यनन्ता हि तेषां भेदाविमौ मतौ ।
संसारिणोऽत्र सिद्धाश्च इति सम्यग् विचारय ॥ ३४४ ॥
आत्मा नित्यश्च कर्ताऽथ हर्ता स्वकर्मणां मतः ।
मोक्षोपाय श्च मोक्ष श्च इति षट् स्थानकं मतम् ॥ ३४५ ॥

शिष्य उवाच ।

स दृष्ट्या नैव दृश्योऽस्ति स्पर्शग्राह्यो न वर्तते ।
आत्मद्रव्यास्तिता नैव जायते चानुभूतितः ॥ ३४६ ॥
मन्यतां देहमात्मानं श्वासोच्छ्वासं च मन्यताम् ।
मूर्तिश्च पंचतत्त्वानां नान्याभासो विलोक्यते ॥ ३४७ ॥

तथा न चेतनद्रव्यं यथा ज्ञेयः घटः पटः ।
नास्तिता चेतनस्यात इति मिथ्याऽस्ति ते वचः ॥ ३४८॥
आत्मा चेन्नास्ति तद्व्यर्थाः स्यु स्तपोजपसंयमाः ।
पुण्यपापे मृषा मत्वा मुह्यन्ति मूढमानवाः ॥ ३४९ ॥
जीवस्येमां महाशंकां च्छिन्धि हे देव सद्गुरो !! ॥
मतिहीनोऽस्मि जीवोऽहं कुमतिं ध्वंशयाशु मे ॥ ३५० ॥

## गुरुरुवाच

त्यक्त्वोच्छृखलवृत्तिं त्वं युक्तिदीपं गृहाण च ।
जानीहि चेतनाऽस्तित्वं मुक्तेव शुक्तिकान्तरे ॥ ३५१ ॥
भिन्नोऽस्ति पंचभूतेभ्यः शुद्धोऽरूपश्च निर्मलः ।
देहव्याप्योऽस्ति जीवोऽयं व्यापि दुग्धं यथा जले ॥३५२ ॥
अहं सुखी तथा दुःखी नैषाधीर्वपुषो मता ।
मृतदेहे कदाचिन्न किञ्चिच्चेष्टाऽपि दृश्यते ॥ ३५३ ॥
पंचभूतगुणा दृष्टाः काठीन्यशीततादयः ।
चैतन्यादि न तत्राऽस्ति सूक्ष्मत्वेनाऽवलोक्यते ॥ ३५४ ॥
अरूपी चेतनोऽयं तु चक्षुर्ग्राह्यः कदापि न ।
स्पर्शेन पुद्गलस्कन्धा दृश्यन्ते तु सदा धृताः ॥ ३५५ ॥
श्वासोच्छ्वासस्तु भो शिष्य ! सदा स्पर्शेन गृह्यते ।
गच्छंश्च बहिरागच्छन् स कथं चेतनो भवेत् ॥ ३५६ ॥
पुद्गलो न कदाचित्स्याज्जीवोऽयं ज्ञातृताश्रयः ।
न चेद् घटादिके द्रव्ये ज्ञातृशक्तिश्च गृह्यते ॥ ३५७ ॥
संयोगः पंचभूतानां मद्यांगे मदशक्तिवत् ।
उत्पादयति चैतन्यं युक्तिः सा निष्फलैव हि ॥ ३५८ ॥
भिन्ने भिन्ने च मद्यांगे मदशक्तिस्तु भासते ।
भूते भूते च नो तद्वज् ज्ञानवासोऽनुभूयते ॥ ४५६ ॥

आश्रयो योऽस्ति बुद्ध्यादे श्चेतनं तं विजानत ।
आदिशब्देन ते ग्राह्याः सुखदुःखादयस्तथा ॥ ३६० ॥

बुद्ध्यादिराश्रितो यत्र सहि ज्ञेयो गुणालयः ।
रूपादिवांद्धि विज्ञेया उपाया आत्मसिद्धये ॥ ३६१ ॥

गुणो निराश्रयो नैव यथा रूपं घटादिषु ।
तथाऽऽश्रयोऽस्ति बुद्ध्यादेश्चिदानन्दः परेश्वरः ॥ ३६२ ॥

शिष्य उवाच ।

आश्रयः किन्तु बुद्ध्यादे रिन्द्रियं हि प्रवर्तते ।
कल्पना चेतनस्य स्याद् कथं सद्गुरुराज हे ! ॥ ३६३ ॥

गुरुरुवाच ।

उपहतेन्द्रिये नैव जायते विषयस्मृतिः ।
आश्रयस्य विनाशेन स्मृत्युत्पत्तिः कथं भवेत् ॥ ३६४ ॥

कर्णेन्द्रियविनाशेन नाशः स्यात्तु स्मृते र्नहि ।
स्मृत्याश्रयस्तदात्माऽयं सत्यबोधं विजानत ॥ ३३५ ॥

इन्द्रियमन्वभूद्यच्च विनाशे सति तस्य तु ।
अन्येन्द्रिये स्मृतिस्तस्य मिथ्यैवैतदपि स्फुटम् ॥ ३३६ ॥

एवं सति तु चैत्रेण वस्त्वनुभूतमस्ति यद् ।
मैत्रस्य तत्स्मृतिश्च स्यात्तस्माद्व्यर्थमिदं वचः ॥ ३६७ ॥

शिष्य उवाच ।

नेन्द्रियाणि तदा सन्तु बुद्धिः स्यादाश्रयः पुनः ।
बुद्ध्याश्रयश्च देहोऽस्ति विचार्य कथयाम्यहम् ॥ ३६८ ॥

शरीरनाशतो बुद्धि–नाशएव विलोकितः ।
भस्मीभूतं शरीरं चे–चेतनो नाऽपि दृश्यते ॥ ३६९ ॥

## सद्गुरुवाच

तनुभेदः प्रसिद्धोऽयं बाल्यं च यौवनं जरा ।
बालदेहेन भुक्तं य–त्तेनैव तत्स्मृतिः कृता ॥ ३७० ॥

तस्य स्मृतिः कदाचिन्न जायते यौवने तदा ।
बालदेहेन भुक्तं य–त्तरुणस्तत्कथं स्मरेत् ॥ ३७१ ॥

जायते तन्मृते देहे बुद्धिस्फुर्तिः कथं नहि ।
तस्माद्बुद्ध्याश्रयो वाच्य–श्चेतनः स्मृतिकारकः ॥ ४७२ ॥

## शिष्य उवाच ।

बुद्ध्याश्रयो न देहश्चे–च्छ्वासोच्छ्वासस्तदा भवेत् ।
श्वासो यत्र न तत्राऽस्ति सुखंदुःखं न वीक्ष्यते ॥ ३७३ ॥

श्वासोच्छ्वासेऽपि भेदोऽस्ति नैकरूपः स वर्तते ।
बुद्ध्याश्रयो यदुक्तोऽयं सोऽपि कूपसमो जडः ॥ ३९४ ॥

श्वासोच्छ्वासेन चैकेन स्वनुभूतं हि शिष्य! यद् ।
अन्यश्वासो न तत्स्मर्ता नाऽयंबुद्ध्याश्रयस्तदा ॥ ३७५ ॥

बुद्ध्याश्रयो यदि श्वास स्त्वचा स्पृश्यः स वर्तते ।
त्वचा श्वासं तु गृह्णाति कथं बुद्धि र्न गृह्यते ॥ ३७६ ॥

सोऽयं प्रतीतियोगेन यश्च बुद्ध्याश्रयो भवेत् ।
आत्मतत्त्वं हि तज्ज्ञेयं शंका तत्राऽस्ति काऽपि न ॥३७७॥

## शिष्य उवाच.

भिन्नदेहादित श्चेद्धि मन्यते चेतनं भवान् ।
तद्दर्शय पृथक् कृत्य खड्गकोशौ यथा पृथक् ॥ ३७८ ॥

## गुरु रुवाच.

निरीक्ष्यते कदाचिन्न वायु रूप्यपि नेत्रतः ।
अरूपी तर्हि जीवोऽयं कथं दृश्यः स नेत्रतः ॥ ३७९ ॥

## बौद्ध उवाच.

चेतनं तर्हि मन्यस्व ज्ञानक्षणिकसन्ततिम् ।
प्रकृतिरूपविज्ञानो,-पादानमालयो भवेत् ॥ ३८० ॥
ज्ञानमस्त्येकरूपं न क्षणे स परिवर्तते ।
ज्ञानसन्ततिरात्माऽस्ति मन्यस्व युक्तिपूर्वकम् ॥ ३८१ ॥
स्वीकारे नैव दोषोऽस्ति ज्ञानक्षणिकसन्ततेः ॥
क्षणिकोत्तरविज्ञानं पूर्वज्ञानस्य पोषणम् ॥ ३८२ ॥

## गुरुरुवाच.

न चेतनपदै र्वाच्या ज्ञानक्षणिकसन्ततिः ।
क्षणिकसन्तते ज्ञाने पुण्यं पापं लभेत कः ॥ ३८३ ॥
विनश्यति कदाचिन्न उपादानाख्यकारणम् ।
चेदालयस्यनाशःस्याद्वृत्तिः कुत्र प्रकाशते ॥ ३८४ ॥
तदा चेतनरूपः स्यान्नित्यः स्यादालयो यदि ।
स्वीकारे नैवदोषोऽस्ति ज्ञात्वा मौनी भव स्वयम् ॥ ३८५ ॥
आलये स्वप्रवृत्तौ चेद्भेदं कंचिच्च मन्यते ।
उपादानाख्यहेतो स्त-द्विच्छेदः स्यादहो ध्रुवम् ॥ ३८६ ॥
समुदायो न सूत्राणां जायते घटवस्तुना ।
कार्यं च कारणं भिन्नं तदा कार्यं कथं भवेत् ॥ ३८७ ॥
कार्यकारणभावः स्या-च्चैत्रमैत्रभिदेव हि ।
स्मृतिभंगो भवेत्तत्र किं स्यु स्तत्र सुयुक्तयः ॥ ३८८ ॥
क्षणिकसन्तते ज्ञाने तादात्म्यं हेतुकार्ययोः ।
क्षणवादस्य नाशःस्या-दिति ज्ञाने सुनिश्चयः ॥ ३८९ ॥
यदि स्यादुत्तरज्ञान,-दशायां पूर्ववेदनम् ।
स्थिरबुद्धिस्ततो जाता बुद्धिनाशः क वीक्षितः ॥ ३९० ॥

आलयस्य च यत्स्थैर्यं तदाऽऽत्मानं विचारय ।
तदा बन्धोऽथ मोक्षःस्या ज्ज्ञानमस्त्यात्मनो गुणः ॥३९१॥
पूर्वजन्मस्मृतेरेव पुनर्जन्म च साध्यते ।
भुनक्ति पुण्यपापे च प्रसिद्धो नित्यचेतनः ॥ ३९२ ॥
चेतनो यदि नित्यःस्यात्कर्म किञ्चिन्न तल्लगेत् ।
तस्मादात्माऽस्त्यनित्योऽयं नश्यति च क्षणे क्षणे ॥३९३॥
अत्र क्षणे य आत्माऽस्ति तच्छ्णे स विनश्यति ।
पुण्यपापसुखादीनां,-घटना च कथं भवेत् ॥ ३९४ ॥
अन्यःकुर्यात्तथाऽन्यस्य,-बन्धः स्यात्पुण्यपापयोः ।
अन्यस्य यदि मोक्षः स्या-देतत्सर्वं तदा मृषा ॥ ३९५ ॥
कः कर्त्ता कश्च भोक्ता स्यान्मृषा न्यायश्च सर्वथा ।
नित्यात्मज्ञानतः सर्वः कर्त्ता भोक्ता च सिध्यति ॥ ३९६ ॥
अभ्रसंघापसारेण स्वयं सूर्यः प्रकाशते ।
नित्यात्मज्ञानतः सर्व,-दोषनाशश्च जायते ॥ ३९७ ॥
संयोगं न विधायैव यस्योत्पत्तिः प्रजायते ।
तस्य नाशो भवेन्नैव ततो नित्यः स वर्तते ॥ ३९८ ॥
अहंकृतेश्च कोपस्य सिंहे सर्पे च भासते ।
तारतम्यं ततो विद्धि तत्राऽस्ति पूर्ववासना ॥ ३९९ ॥
पूर्वस्या वासनायाश्च योगेनात्माऽस्ति तु ध्रुवः
बौद्धानां क्षणिको वादः सिद्ध्यति न कदाचन ॥ ४०० ॥

## शिष्य उवाच.

कर्मकर्त्ता न जीवोऽयं कर्मैव कर्मकारकम् ।
आत्मा स्वकर्मकर्ताऽस्ति जीवधर्मस्य मर्म तद् ॥ ४०१ ॥
निःसंगोऽस्ति सदाऽऽत्माऽयं जलपंकजसन्निभः ।
कर्त्तृत्वं चाऽपि भोक्तृत्वं प्रकृतावेव भासते ॥ ४०२ ॥

योगेन श्रीश्वरेच्छाया बन्धो भवति कर्मणाम् ।
सुखं दुःखं ततो याति जीवो निर्बंध उच्यते ॥ ४०३ ॥

अनादिपरिणाम्यस्ति चेतनपुद्गलद्वयम् ।
अशुद्धपरिणामेन कर्मकर्त्ता स जायते ॥ ४०४ ॥

जीवस्य प्रेरणा चेन्न कर्मग्राही ततोऽस्ति कः ।
प्रेरणा न जडे काचि द्भिन्नं धर्मद्वयं ततः ॥ ४०५ ॥

चेतनप्रेरणायां हि कर्म सर्वं प्रगृह्यते ।
प्रेरणा परभावोऽस्ति सदृशो मत्तचेष्टया ॥ ४०६ ॥

विचार्य हृदये पश्य कर्म न कर्मकारकम् ।
घटादिः प्रेरयेत्किंच पवित्रं न्यायमीक्षताम् ॥ ४०७ ॥

चेतनः कर्मकर्त्तेति व्यवहारेण वर्तते ।
शुद्धस्वभावधर्मस्य कर्त्तोऽस्ति चेतनः स्वयम् ॥ ४०८ ॥

मूलं धर्मं त्यजेन्नैव स्वभाव एष आत्मनः ।
अशुद्धपरिणामेन कर्मकर्त्ता स वर्तते ॥ ४०९ ॥

परिणतं पयोनीरं हंसो हि कुरुते पृथक् ।
रममाणो गुणे स्वीये हंसः कर्मक्षयंकरः ॥ ४१० ॥

विभाविकोऽस्ति यो धर्म श्चेतनस्य न विद्धि तम् ।
स्वाभाविकः स्वधर्मोऽस्ति विद्धि ज्ञानस्य मर्म तद् ॥ ४११ ॥

स्वतः शुद्धस्वधर्मेण ह्यशुद्धपरिणामतः ।
कृतानां कर्मणां नाशो भगवद्भि र्निरूपितः ॥ ४१२ ॥

सदा निःसंग आत्माऽयं ज्ञेयो निश्चयसत्तया ।
कर्मकर्तृत्वभोक्तृत्वे वर्तेते व्यवहारतः ॥ ४१३ ॥

जन्मवार्धक्यमृत्यूनां,–दुःखस्य कर्म कारणम् ।
कर्मोदयफलंतत्स्यात् साताऽसाताख्यकर्मकम् ॥ ४१४ ॥

लाक्षारसस्य योगेन- बीजं कार्पासिकं यथा ।
रक्तं तूलं च यद्वत्स्यात् कर्मबन्धफलं तथा ॥ ४१५ ॥

नाशयेदष्टकर्माणि शुद्धः स्याच्चेतनस्तदा ।
आत्मस्वभावत आत्मा लभते तात्त्विकर्द्धिकम् ॥ ४१६ ॥

शिष्य उवाच

अनादिकालतः संगो वर्तते जीवकर्मणोः ।
कर्मणां स्यात्कथं नाश स्तत्र किम्वाऽस्ति कारणम् ॥४१७॥

गुरुरुवाच

अनादिपरिणामी सन् मिथ्या भ्रान्तोऽस्ति चेतनः ।
मुच्यते चेतनः खानौ रजःकनकवत्पृथक् ॥ ४१८ ॥

योगेन श्रीश्वरेच्छायाः सुखं दुःखं कुतो भवेत् ।
प्रेरणा श्रीश्वरीया चे-दीशो दोषी विलोक्यते ॥ ४१९ ॥

गुरु रुवाच

ईश्वरप्रेरणा कस्मा दीशोऽन्यायी भवेत्तदा ।
अपराधी तथा न्यायी स्वयं स्यादीश्वरस्तदा ॥ ४२० ॥

शिष्य उवाच

प्राणिनः कर्म कुर्वन्ति सामग्र्या अनुसारतः ।
ईशो दुःखं सुखं दत्ते चाकर्त्ताऽऽत्मा विलोक्यते ॥ ४२१ ॥

गुरुरुवाच

कृत्यं करोति यो भुंक्ते सैव दुःखं तथा सुखम् ।
योऽत्ति स तृप्ति माप्नोति क्षुधां हन्ति नच प्रभुः ॥४२२॥

वह्नौ क्षिपति यो हस्तं ज्वलन्तं कर्मीक्षते ।
स्वयं कर्त्ता हि जीवोऽस्ति प्रेरकः कथमीश्वरः ॥ ४२३ ॥

विरुद्धबुद्धियोगेन नाशोऽस्ति विषभक्षणात् ।
प्राणानां वेत्तु भो भव्य तत्र न्यायोऽस्ति नैश्वरः ॥४२४॥

स्वयमेव सुखं दुःखं जीवः प्राप्नोति कर्मणा ।
ईश्वरप्रेरणा मिथ्या सुखं दुःखं च कर्मणा ॥ ४२५ ॥

सदा निःसंग आत्माऽयं दृश्यो निश्चयसत्तया ।
व्यवहारेण कर्ताऽस्ति चेतनः सुखदुःखयोः ॥ ४२६ ॥

अकर्ता सत्यमात्माऽयं कर्मनाशेन दृश्यते ।
नयेन तस्य बोधेन शुद्धधर्मः प्रकाशते ॥ ४२७ ॥

शिष्य उवाच ।

न्याययुक्तैश्च दृष्टान्तैः कर्मकर्त्ता विलोक्यते ।
किं जानाति जडं कर्म फलपरिणामवद्भवेत् ॥ ४२८ ॥

गुरुरुवाच ।

यद्यप्यस्ति जडं कर्म चामृतविषवत्तु तद् ।
सुखदुःखनिमित्तं स्यात्तत्र केश्वरकल्पना ? ॥ ४२९ ॥

शिष्य उवाच ।

कर्त्ता भोक्ताऽस्ति जीवस्तु तस्य मोक्षो न वर्त्तते ।
अनन्तसमयो नष्टो मुक्ति मद्याऽपि नाऽऽप सः ॥ ४३० ॥

भुनक्ति मानवः स्वर्गे पुण्यानां फलमुत्तमम् ।
अथ पापफलं भुंक्ते जायमानश्च दुर्गतौ ॥ ४३१ ॥

पापपुण्यफलं भुंक्ते जीवो गत्वा चतुर्गतौ ।
प्रतिक्षणं धरन्कर्म कर्महीनः कदापि न ॥ ४६२ ॥

सद्गुरु रुवाच ।

अशुद्धपरिणामेन फलदं कर्म वर्तते ।
तथा निवृत्तिधर्मेण सिद्धस्तिष्ठति निर्वृतौ ॥ ४३३ ॥

परभावेषु जीवस्य त्वनन्तसमयो गतः ।
आत्मचिन्तनयोगेन मुक्तिरेव प्रकाशते ॥ ४३४ ॥

संयोगेऽस्ति वियोगो हि दृष्टान्तोऽत्र कलेवरः ।
सर्वकर्मवियोगेन जायते मुक्तिरात्मनः ॥ ४३५ ॥

शिष्य उवाच—

अस्तिता याऽस्ति मोक्षस्य सा त्वस्माभिः प्रवेद्यते ।
ध्वंशः कदापि नैव स्या-दनन्तभवकर्मणाम् ॥ ४३६ ॥

भिन्नदर्शनधर्माश्च मुक्त्युपाया अनेकशः ।
तत्र सत्यमसत्यं किं चित्ते नास्त्यस्य निर्णयः ॥ ४३७ ॥

कुत्र देशे क्व जातौ वा मोक्षः कुत्र पथि स्थितः ।
निश्चय स्तस्य नैव स्याद-भिलष्येत्तदात्र किम् ॥ ४३८ ॥

आदौ भवोऽथवा मुक्तिः को वाऽद्यो जीवसिद्धयोः ।
इत्यादौ चिन्तयँश्चित्ते मोक्षसिद्धि र्न जायते ॥ ४३९ ॥

सद्गुरुरुवाच ।

मोक्षो ज्ञानक्रियाभ्यां स्या-दूचे सूत्रं जिनेश्वरः ।
स्फुलिंगै र्दह्यते काष्ठं तथा ध्यानेन कल्मषः ॥ ४४० ॥

यस्यास्ति जन्मनो रोगो नीरोगी औषधाद्भवेत् ।
अनन्तभवभूतानां कर्मणां नाशतः शिवम् ॥ ४४१ ॥

तमो व्याप्नोति संसारं नश्यति भास्करोदयात् ।
सत्यज्ञानं यतस्तत्र को भारः कर्मणां भवेत् ॥ ३४२ ॥

यज्ज्ञानावरणीयाद्य-कर्मणामष्टकं मतम् ।
मोहनीयं ततः श्रेष्ठं प्रजासु भूपति र्यथा ॥ ४४३ ॥

तन्नाशे सर्वनाशोऽस्ति जितभूपात्प्रजा यथा ।
कर्मनाशात्सुखं शश्वत्कः सन्येऽस्मिन् संशयः ॥ ४४४ ॥

मतेऽन्धश्रद्धया रागस्तत्त्यागो ज्ञानतो भवेत् ।
जातौ लिंगे च मोक्षाश–स्तस्य मुक्ति-र्न जायते ॥४४५॥

पंचकारणसंघेन सम्यक्त्वेन निजाऽऽत्मनः ।
मोक्षो भवति लोकानां तत्र किञ्चिन्न संशयः ॥ ४४६ ॥

भवमुक्त्यो र्चाऽस्त्यादि–रनाद्यौ द्वौ प्रवाहतः ।
अनेकान्तस्य विश्वासान्मिलन्ति मुक्तिहेतवः ॥ ४४७ ॥

केवलज्ञानिनां वाणी श्रुतपूर्वा शिवाध्वगा ।
सत्यं शब्दैकभावोऽस्ति तीर्थकृद्वचन त्विदम् ॥ ४४८ ॥

एकशब्दोऽस्ति मोक्षादिः सत्यं तस्माद्विवेचय ।
यस्य बन्धोऽस्ति तन्मुक्ति स्तत्रासत्यं न कश्चन ॥ ४४९ ॥

शिष्य उवाच ।

षट्स्थानकं भवत्प्रोक्तं गुरुदेवाऽनुकम्पया ।
श्रद्धया मे गतास्ते तु कुविचारा अनादिजाः ॥ ४५० ॥

अद्यपर्यन्तमज्ञानात्तत्त्वज्ञानं न लब्धवान् ।
वन्देऽहं सद्गुरो ! त्वां च पवित्रोऽहं कृतस्त्वया ॥ ४५१ ॥

धर्मरत्नं मयालब्धं निधानं परमीप्सितम् ।
शरणं तेऽस्मि हे नाथ ! कश्चिन्नास्ति त्वया समः ॥ ४५२ ॥

अनादिकालतो भ्रान्तः किन्तु नान्त मुपेयिवान् ।
सम्यक्तत्त्वप्रबोद्धारं गुणिनं त्वां नमाम्यहम् ॥ ४५३ ॥

शिष्य उवाच ।

कथं सिद्धालये मान्ति ह्यनन्तासिद्धराशयः ।
निराकुरु च मे शङ्कां यस्माच्छङ्का न जायते ॥ ४५४ ॥

सद्गुरुरुवाच.

सिद्धशिलोपरि स्थानं शाश्वतं च प्रवर्त्तते ।
कर्मनाशेन जीवोऽय भगवाँस्तत्र जायते ॥ ४५५ ॥

अनेकदीपकज्योति–र्यथैकदीपकार्चिषि ।
अरूपिणस्तथा सिद्धा मान्ति दोषो न वर्तते ॥ ४५६ ॥

विषाभा विषयाः सन्ति बहिरात्मपदं जहि ।
अस्य मोक्षपदेच्छाऽस्ति योग्यः स धर्मकर्मणि ॥ ४५७ ॥

दुःखात्यन्तिकनाशं हि मुक्तिं वैशेषिका विदुः ।
मन्यते मानसं नित्यं मुक्तौ चेतः सहात्मना ॥ ४५८ ॥

बुद्ध्यादीनां यतो नाशस्तत्र मोक्षेऽस्ति किं सुखम् ।
तस्मात्तु जम्बुकः श्रेष्ठ–स्तस्मा च्छ्रेष्ठोऽस्ति मानवः ॥ ४५९ ॥

वेदान्तिनो जगु र्मुक्तिं जगद्व्यापक चेतनम् ।
चेतनो व्यापको नाऽस्ति शिवाशा स्यात्तथा कथम् ॥४६०॥

मुक्तिमार्यसमाजास्तु भाटकागारवज्जगुः
मुक्तितो जीव आयाति मुक्ति र्दुःखहरी न सा ॥ ४६१ ॥

कर्मक्षयान्न संसारो मुक्तो जन्म धरेत्कथम् ? ।
गायति मुक्तिमेकस्तु महत्तामसकूपवत् ॥ ४६२ ॥

ईश्वरं प्राप्तुमिच्छाचेद् विश्वासं कुरु तस्य च ।
विश्वासीश्वरदासश्च "मुक्ति फौजे" मिलेद्ध्रुवम् ॥ ४६३ ॥

ईशुरीश्वरपुत्रोऽस्ति जगत्सत्रं तनोति सः ।
शरीरेण यतो मुक्ति र्जन्ममृत्युक्रमस्ततः ॥ ४६४ ॥

अन्धो भ्राम्यति कुञ्जेषु किन्तु गेहं न गच्छति ।
ज्ञानचक्षु र्यदा चित्ते तदा मुक्ति र्विलोक्यते ॥ ४६५ ॥

साक्षरा न च गृह्णन्ति तादृग् मुक्तिं कदापि न ।
केऽपि क्रियां हि मन्यन्ते केऽपि ज्ञानं दधन्ति च ॥४६६॥

खण्डयन्त्येक एकांश्च म्रियन्ते पक्षपाततः ।
पक्षापक्षौ हि चैकान्ते दक्षो विन्ते नयद्वयम् ॥ ४६७ ॥

कुपथानि नयाभासाः सापेक्षाज्ज्ञानिनामिमे ।
एकैकस्मान्नयाज्जातं दर्शनं नाऽन्यपेक्षितम् ॥ ४६८ ॥

अब्धौ नद्यो यथा मान्ति मतानि जैनदर्शने ।
अन्यत्र जिनवाणी तु आयत्वेन प्रवर्तते ॥ ४६९ ॥

कर्माष्टक विनाशेन परमात्मा प्रकाशते ।
नश्यन्ति भवचक्राणि क्षायिकधर्म उद्भवेत् ॥ ४७० ॥

प्रवर्तते सुखानन्त्यं सिद्धानां समयं प्रति ।
पूर्वप्रयोगतः सिद्धा उर्ध्वे यान्ति शिवालयम् ॥ ४७१ ॥

याति नोर्द्ध्वमधस्तिर्यक् यस्मात्सोऽस्त्यक्रियः स्थिरः ।
नौमि तादृग् विभुं नित्यं, कदा प्राप्स्यामि धाम तद् ॥४७२॥

साद्यनन्तास्थितिप्राप्तं तं सिद्धं नौमि भावतः ।
केवलज्ञानतो वेत्ति सर्वं यश्च तमाश्रये ॥ ४७३ ॥

खेदो हि व्यवहारेऽस्ति भेदेनात्मपरात्मनोः ।
भेदभावो न यत्राऽस्ति शुभं तत्राऽस्ति निश्चयात् ॥ ४७४ ॥

आत्मरूपं यदा पश्येदुत्तमदृष्टिरुद्भवेत् ।
शृणु पठाऽऽखिलान्ग्रन्था–नात्मदृष्टि र्हि मुक्तिदः ॥४७५॥

दध्यात्कोऽप्युत्तमां दृष्टिं सिद्धो याति शिवालये ।
ज्ञानादिगुणसाफल्यं समभावेन पश्यताम् ॥ ४७६ ॥

शत्रौ मित्रे च साम्येन शुद्धधर्मः प्रकाशते ।
देहे सति विदेहोऽसौ किं भयं चेद्दृशेदृशी ॥ ४७७ ॥

निर्ग्रन्थिने नमस्तस्मै यस्य दृष्टिः शिवाध्वनि ।
लभे सद्गुरुमेवं चेत्तदा निजगुणं लभे ॥ ४७८ ॥

शैत्यं तापाश्रयान्नश्येत् पापान्तः साधुसंगतः ।
तन्मन्यस्व गुरोराज्ञां लभध्वं शाश्वतं पदम् ॥ ४७९ ॥

धन्यं जन्म तदा मे स्याद्यदा शिवपुरं लभे ।
दावाग्निरेष संसार स्तत्पारं च कदा लभे ॥ ४८० ॥

यदैवं चिन्तनं चित्ते दोषा यास्यन्ति तत्पृथक् ।
आत्मध्याने क्षणं यत्स्या–च्छ्रेष्ठं तद्धि भवक्षणम् ॥ ४८१ ॥

व्याप्योऽस्ति प्रतिदेहं स वाच्यो यन्महिमा नहि ।
यश्च नामी तथाऽनामी कदा तद्दर्शनं लभे ॥ ४८२ ॥

यत्र शब्दो न गन्धोऽस्ति नास्तिको यं न पश्यति ।
जहौ लेभेऽतिदेहान्स किन्तु नित्यः स वर्तते ॥ ४८३ ॥

नादि र्नान्तश्च यस्याऽस्ति तस्मात्सोऽस्त्यजरोऽमरः ।
योग्यपि कथ्यते भोगी चेतनं तं नमाम्यहम् ॥ ४८४ ॥

यस्य ध्यानेन सौख्यं स्या–द्दुःखान्तो मृत्युजन्मनोः ।
यस्याऽपारा गुणा सन्ति जाति र्लिगं यतो नहि ॥ ४८५ ॥

एकरूपस्त्रिकालेषु स्वपर्यायगुणाश्रयः ।
क्रमवर्ती तु पर्यायः सहभावी गुणः पुनः ॥ ४८६ ॥

षड्द्रव्ये वर्तनन्त्वेवं चिन्तनाल्लभ्यते शिवम् ।
शुक्लध्यानं च तेन स्याच्छास्त्रे निश्चयभाषितम् ॥ ४८७ ॥

षड्द्रव्ये निखिलं माति सूत्रे वक्ति जिनेश्वरः ।
चेत्सौक्ष्म्येपा भवेज्ज्ञानं मुक्तिःस्यात्स्वल्पजन्मना ॥४८८॥

निश्चयदृष्टिभाक्चित्ते व्यवहाराद्गुणीभवेत् ।
भवपारं स नो याति एकान्ते व्यवहारवान् ॥४८९॥

नास्ति कश्चिन्मृषा तत्र सर्वज्ञोक्तनयद्वये ।
निश्चयरूपकार्यस्य व्यवहारोऽस्ति कारणम् ॥ ४९० ॥

तरन्ति भवपाथोधिं षडावश्यकारिणः ।
यस्य कर्मास्ति दम्भाय भ्राम्यति स भवोदधौ ॥४९१॥

भावं विना क्रिया व्यर्था ज्ञात्वा कुरु शुचो जहि ।
इतस्ततो मनश्चेत्स्यात्स कथं धर्मकर्मकृत् ॥ ४९२ ॥

चित्तं तिष्ठति नैकत्र किं क्रियायाः प्रयोजनम् ।
न निश्चिनुत चेत्येवं धर्मोद्यमाच्छिवं भवेत् ॥ ४९३ ॥

धर्मः स्वगुणरत्नैव चाधर्मः स्वगुणाऽपहः ।
धर्मे स्वाऽऽत्मप्रवृत्ति श्चेन्निजर्द्धिःस्वेन लभ्यते ॥ ४९४ ॥

बाह्यक्रियाकृदात्मा चेत्कर्म कृत्वा भवे भ्रमेत् ।
पापक्रियैव संसारो धर्मक्रियैव मोक्षदा ॥ ४९५ ॥

आर्तरौद्रक्रियात्यागो यस्मात्ताभ्यां सुखं नहि ।
सा तद्धेतुक्रिया मुक्ति-प्रदा चास्त्यमृताक्रिया ॥ ४९६ ॥

आत्मज्ञानेन देहो न चेतनोऽस्ति गुणालयः
अर्हदादिपदं यच्च तद्धर्ताऽप्येष चेतनः ॥ ४९७ ॥

यद्यदिच्छति जीवोऽयं तत्तत्फलमवेति सः ।
भवानन्दी भवभ्रामी स्वात्मानन्दी लभेत शम् ॥ ४९८ ॥

अव्ययो निर्मलःस्वात्मा मुक्तिस्त्रीपतिरुत्तमः ।
स्वयं कुरु विकाशं त्वं स्वविश्वासं समाचर ॥ ४९९ ॥

त्वां विनाऽन्नाऽस्ति कःसार स्त्वां विना निर्मलोऽस्ति कः ।
नह्यस्ति त्वत्समः कोऽपि स्वध्यानं धर निर्मलम् ॥५००॥

भवद्गुणलवादानैःक्लेशा नश्यन्ति भूरिशः ।
योगिनस्त्वां तु पश्यन्ति मोहो नायाति तद्धृदि ॥ ५०१ ॥

स्वं स्वयं वीक्षते योगी पापं तस्य कुतो भवेत् ।
योगी ध्यानगुहावासी नैति कर्म तदन्तिके ॥ ५०२ ॥

अन्योऽस्ति योगिनो योगो लभन्ते मोहिनो न तम् ।
योगी जागर्ति निद्रान्ति सर्वे का योगिनां कथा ॥ ५०३ ॥

वक्ति पश्यति यो योगी सोऽहमात्मा स कथ्यते ।
पराऽऽत्मजीवयो र्भेदो भवखेदश्च नश्यति ॥ ५०४ ॥

धन्यं मन्ये स्वजन्माऽहं किञ्चिद्रूपमभास्यत ।
अकलगति रात्मँस्त्वं स्वस्य सेवां स्वयं कुरु ॥ ५०५ ॥

दानिन्निजगुणं देहि ज्ञानिन्देहि गुणज्ञताम् ।
तव सौख्य मबाधश्च सुखं साधय साधनात् ॥ ५०६ ॥

धर्मद्वयं जिनप्रोक्तं हेतुः शाश्वतशर्मणाम् ।
धर्मं ज्ञात्वा यथाशक्ति स्वीकारं कुरु तस्य च ॥ ५०७ ॥

त्वं धर्ताऽस्यात्मधर्माणां निश्चयात्समतोदधिः ।
तृष्णायाः किंकरो नाऽस्मि नाऽस्मि पुद्गलवास्यहम्–॥५०८॥

न निन्देद्धर्मिणं कश्चि–दतिनिन्दाफलं कटु ।
तपोजपादिमान्श्राद्धो भ्रमति निन्दनाद्भवे ॥ ५०९ ॥

अन्त र्मर्म न जानाति धर्मःकास्तिलकादितः ।
शुद्धरूपं धराऽवश्यं धन्यं जन्माऽस्ति तस्य तु । ॥ ५१० ॥

श्रावकाख्यः कुले जातः कथं मुक्ति र्भवेत्ततः ।
स्यात्फलं यदि नाम्नैव धनेशाख्यो न याचताम् ॥५११॥

साधूनां कुरुते शिक्षां न स्वयं श्रावकव्रती
गुरुशत्रुः स चाण्डालः शृगालजन्म तद्वरम् ॥ ५१२ ॥

विषमः कलिकालोऽयं कश्चिद्धि श्रावको गुणी
निन्दको मुनिविद्रोही तस्य बोधः कथं भवेत् ॥ ५१३ ॥

पण्डितः श्रावकः कश्चिन्न भवेद्गुरुतोऽधिकः ।
मेरुसर्षपवद्भेदो ज्योतिरन्तरथोतमः ॥ ५१४ ॥

उत्तराध्ययनं साक्षि, गुणार्थं कुरु तत्क्रमम्
दृष्टिरागेऽस्ति को धर्मः परं द्वेषेण कर्म हि ॥ ५१५ ॥

घर धर्मगुरो राज्ञां तरीतुं तीर्थ एव सः ।
भवपारं ततो यातु सारं तच्च सुखाकरम् ॥ ५१६ ॥
साधुव्रताभिलाषी यो यश्च सद्गुरुर्किंकरः ।
सद्गुणानां च यो धाम स सत्यश्रावको मतः ॥ ५१७ ॥
पंचमहाव्रताचारधर्मध्यानेषु वर्तते ।
भवभीतो जिनाज्ञासु वर्तते यो दिवानिशम् ॥ ५१८ ॥
वाह्योपाधिविषं त्यक्त्वा समाधिं प्राप्य जन्मजाम् ॥
स्वरूपं बोधयामास वन्दे तं गुरुमीश्वरम् ॥ ५१९ ॥
श्रीपार्श्वमणियोगेन लोहो याति सुवर्णताम् ॥
अबोधो यस्य बोधेन बुद्धस्तं श्रीगुरुं भजे ॥ ५२० ॥
एवं गुरुं हि सेवस्व तीर्थं जगत्सुखप्रदम् ॥
यस्य वाणी च गम्भीरा ध्यानी धीरोऽथ योगवान् ॥ ५२१ ॥
धर्मगुरुर्ममाधारः शुद्धो हि तदुपग्रहः ।
लभ्यते गुरुसेवा चेद्भवपापं लयं व्रजेत् ॥ ५२२ ॥
उपदिशेद्गुरु र्यच्च तल्लवं प्राप्य यत्नतः ॥
वर्णिता गुरुभक्ति र्हि गुरुभक्ति र्हि मे शुभा ॥ ५२३ ॥
प्रादुर्भवन्तु सत्सन्तो वहन्तु ज्ञाननिर्झराः ॥
श्रीशंखेश्वरपार्श्वस्तु कुरुतां मङ्गलं सदा ॥ ५२४ ॥
पद्मावतीसहायेन पूर्ण-ग्रन्थः कृतो मया ॥
पंचशताधिकैः श्लोकैः श्री परमात्मदर्शनम् ॥ ५२५ ॥
लोदरायामिमं ग्रन्थं प्रारेभे स्फुर्तितो मतेः ॥
म्हेसाणायां समाप्तोऽभू-दात्मा शुद्धोऽभवत्ततः ॥ ५२६ ॥
श्रीधर्मचन्द्रः सुरतस्य वासी तस्यात्मजो जीवनलालनामा ॥
तस्मै च संघार्थमहं चकार तरिष्यति ज्ञातृजनो
भवाब्धिम् ॥ ५२७ ॥

श्रीसुखसागराभिख्यं गुरुं लब्ध्वाऽतिमोदतः ॥
मोक्षदश्च कृतो ग्रन्थो बुद्धिसागरसूरिणा ॥ ५२८ ॥
शून्य षण्नवचन्द्रांकै (१९६०) र्मिते वैक्रमवत्सरे ॥
आषाढशुक्लपंचम्यां रचितो मंगलप्रदः ॥ ५२९ ॥

॥ इति श्री परमात्मदर्शननामा ग्रन्थः समाप्तः ॥

